॥ श्रीजिनाय नमः ॥

# ॥ श्रीपालचरित्रं—( द्वितीयावृत्तिः ) ॥

( कर्ता—श्रीजयकीर्त्तिः )

छपावी प्रसिद्ध करनार.

पंडित श्रावक हीरालाल हंसराज. ( जामनगरवाळा )

वीरसंवत्—२४३८. विक्रमसंवत्—१९६८. सने १९१२.

किं रु.–२–०–०

81

॥ श्रीजिनाय नमः ॥

# ॥ अथ श्रीपालचरित्रं प्रारभ्यते ॥

( द्वितीयावृत्तिः )

छपावी प्रसिद्धकरनार—पंडित श्रावक हीरालाल हंसराज ( जामनगरवाला )

प्रणम्य सिद्धचक्रं च । सद्गुरुं निजमानसे ॥ श्रीपालचरितं वक्ष्ये । सुगमं शिष्यहेतवे ॥ १ ॥

अथ जंबूद्वीपे भरतक्षेत्रे विविधसंपद्विभूपितसर्वप्रदेशे मगधदेशे गतदरे राजगृहनगरे श्रेणिकनामा राजा राज्यं करोतिस्म. तस्यैका नंदा राज्ञी वर्त्ततेस्म, तस्या अभयकुमारपुत्रो गुणवान् श्रीमान् तेजस्वी यशस्वी चतुर्बुद्धिनिधिसंपन्नः. द्वितीया चेल्लणा राज्ञी, तस्यास्त्रयः पुत्राः, अशोकचंद्रहल्लविहल्लाख्या बभूवुः, अन्या धारिणीराज्ञी, तस्या मेघकुमारः पुत्रः, अपरा अपि बह्व्यो राज्यः संतिस्म, सुखेन कालं च गमयंतिस्म. तन्नगरपरिसरे श्रीभगवान् महावीरः समवसृतः, देवैः समवसरणं च कृतं, श्रीगौतमः प्रथमगणधरो राजगृहं गतः, वनपालकेन श्रेणिकाय वर्द्धापनिका च प्र-

दत्ता. राजा संतुष्टः सन् तस्मै प्रीतिदानं ददौ. राजा परिवारसहितो वंदनार्थं गतः, भक्त्या गौतमं प्रणम्योचितस्थाने स्थितः, गौतमेन धर्मदेशना प्रारब्धा, दानशीलतपोभावा वर्णिताः, सर्वधर्मेषु भावः प्रधानः, तत्रापि धर्मकृत्येषु सिद्धचक्रप्रभावं स विशेषेण वर्णितवान्. नवपदैः कृत्वा सिद्धचक्रं भवति, तानि कानि नव पदानीत्याह—प्रथममर्हत्पदं १ द्वितीयं सिद्धपदं २ तृतीयं आचार्यपदं ३ चतुर्थं उपाध्यायपदं ४ पंचमं साधुपदं ५ षष्टं दर्शनपदं ६ सप्तमं ज्ञानपदं ७ अष्टमं चारित्रपदं ८ नवमं तपःपदं ९ इति नवपदानि सम्यग्रीत्या ध्येयानि श्रीश्रीपालवत्. ध्यातं तन्नवपदं सदा सुखकरं शिवकरं रोगहरं राज्यकरं च भवति. तदा श्रेणिकेन श्रीगौतमः पृष्टः, कोऽसौ श्रीपालः? कया रीत्या च तेन सिद्धचक्रमाराधितं? तत्स्वरूपं श्रीमद्भिर्भवद्भिः कृपां कृत्वा ममाग्रे कथनीयं. तदा श्रीगौतमः सजलघनगर्जतुल्यवाण्याऽवादीत्—

तस्मिन् काले चतुर्थारके श्रीमुनिसुव्रतस्वामिवारके मालवदेशे उज्जयिनीनामनगरी आसीत्. सा चानेकजिनगृहैर्मंडिता रम्या बहुधनधान्यसंपूर्णाभूत्. तत्र प्रजापालनामा राजा बभूव. तस्यानेकनार्यस्तासां मध्ये द्वे मुख्ये वर्त्ततेस्म. एका सौभाग्यसुंदरी द्वितीया च रूपसुंदरी, तयोः परस्परं

प्रीतिरभूत्. स्वस्वधर्मे स्थिरचित्तयोस्तयोः कदा कदा परस्परं धर्मवादोऽप्यभवत्. सौभाग्यसुंदरी तु मिथ्याधर्मे प्रवीणा रूपसुंदरी च श्रीजैनधर्मे दृढचित्ता स्वकीयं स्वकीयं मतं स्थापयतःस्म, अनया रीत्या तयोः सुखेन कालो गच्छति. कस्मिंश्चित्काले सौभाग्यसुंदर्यां गर्भोत्पत्तिरासीत्, तस्मिन्नेव च समये रूपसुंदर्या अपि गर्भसंभवः समुत्पन्नः, द्वे अपि नार्यौ सुखेन गर्भं पालयतःस्म, यद्दोहदस्तयोः प्रादुर्भवति तत्सर्वं राजा सुखेन परिपूरयतिस्म. आद्या राज्ञी मिथ्यात्वमोहितत्वात् कुगुरुकुदेवकुधर्मान् पूजयतिस्म. द्वितीया रूपसुंदरी तु जिनधर्मचित्तानुरागात् परमशीलालंकारधारिणी सुदेवपूजनसुगुरुसेवनजैनधर्मोन्नतिं चकार. दीनहीनेषु दानं ददातिस्म, सर्वजीवेष्वनुकंपां विधत्ते. गर्भप्रभावात् सकलमपि धर्मकार्यं करोतिस्म. अनया रीत्या सुखेन च सा स्वकालं गमयतिस्म. संपूर्णसमये सौभाग्यसुंदरी पुत्रीं सुषुवे, रूपसुंदर्यपि च पुत्रीं प्रसूतेस्म. दासीभी राज्ञे वर्द्धापनिका प्रदत्ता. राजा ताभ्यः प्रीतिदानं ददौ, महर्द्ध्या तयोर्जन्मोत्सवः कृतः, ज्ञातीयगोत्रियांश्च संतोषयित्वा नामस्थापनासमये सौभाग्यसुंदरीपुत्र्याः ' सुरसुंदरी ' इति नाम प्रदत्तं, रूपसुंदरीपुत्र्याश्च ' मदनसुंदरी ' इति नाम कृतं. द्वे अपि पुत्र्यौ सुखेन वर्द्धतेस्म, परस्परं बालक्रीडां च कुरुतः. एकस्मिन्

दिवसे राज्ञा ते पुत्र्यौ दृष्ट्वा—लालयेत्पंचवर्षाणि । दश वर्षाणि ताडयेत ॥ प्राप्ते षोडशमे वर्षे । पुत्रं मित्रमिवाचरेत ॥ १ ॥ इत्यादि नीतिवचनं विचारितवान्. सुरसुंदरीकन्या शिवभूतये विदुषे पठनार्थं राज्ञा प्रदत्ता. द्वितीया मदनसुंदरी च जिनमतनिपुणाय सुबुद्धिनाम्ने विदुषे समर्पिता. आद्या मिथ्यात्विगुरूपदेशान्मिथ्यात्वधर्मे निपुणा जाता, व्याकरणतर्कसाहित्यालंकारछंदोज्योतिष्सांगवेदवेदांतरसंगीतभरतनाटककाव्यशृंगारकोकादिशास्त्रभाषाप्रबंधगाथाप्रबंधषड्जऋषभगांधारादिसप्तस्वरतंत्रीवाद्यतालघनवंशादिशुषिरनृत्यगांधर्वतांडवादियंत्रमंत्रतंत्रादिप्रहेलिकादोधकगूढादिकामशास्त्रेषु निपुणा स्त्रीणां चतुःषष्टिकलासु दक्षा, 'यादृशो गुरुस्तादृशी बुद्धिर्वर्त्तते' इति न्यायान्मिथ्यात्ववासनायां प्रौढा साऽभवत्. इति सुरसुंदर्याः पाठनाधिकारः ॥

अथ द्वितीया मदनसुंदरी व्याकरणतर्कालंकारसाहित्यकोषादिहेयज्ञेयोपादेयपदार्थस्वसमयपरसमयप्रवीणाष्टकर्मणां मूलोत्तरप्रकृतिबंधोदयोदीरणासत्तादिभेदज्ञा निश्चयव्यवहारषड्द्रव्यसप्तनयनवतत्वदशविधयतिधर्मैकादशप्रतिमाद्वादशविधधर्मकालनियतिप्रकृतिस्वभावपुरुषाकारषट्कायजीवविचारसारपारावारपारीणा एकविंशतिगुणधारिणी जितेंद्रिया सम्यक्त्वगुणधारिणी शीलालंकारशोभमाना

दुर्गतिनिवारिणी ईदृशी मदनसुंदरी बुद्धिबलेन सकलशास्त्रवेत्री बभूव, सकलकलासु कुशला कर्मप्रवादग्रंथेषु च विशेषेण निपुणाऽभवत्, कर्मैव कर्तृ जानाति वीतरागवचनप्रामाण्यात. लोकव्यवहारेऽपि विदग्धा सदा जिनभक्तौ रक्ता षट्कर्मसु च सावधाना सुगुरुपाठकोपदेशात् सुखेन कालं गमयतिस्म, इति मदनसुंदरीपाठनाधिकारः.

अथान्यदाभ्यंतरसभायां प्रजापालराजा परिवारयुतः सहर्षं सादरं स्थितवान्. इतस्तौ सुबुद्धिशिवभूतिनामानौ कोविदौ तत्रागत्य सम्यग्रीत्या राज्ञे निवेदयांचक्रतुः. भो राजन्! युष्माकं कन्याद्वयस्य परीक्षा कर्त्तव्या, तदा नृपेणोक्तं ते मम पुत्र्यावत्राहूयेतां. तदा सुरसुंदरी तत्रागत्य नृपस्य दक्षिणांके स्थिता, मदनसुंदरी तु वामांके स्थिता. हर्षवशेन राज्ञा तयोर्बुद्धेः परीक्षार्थमेकं समस्यापदं कथितं, तत्किं पदमित्याह—' किं किं पुण्येन लभ्यते ' तदा सुरसुंदरी उवाच—प्राज्यं च राज्यं सुभगः सुभर्त्ता । नीरोगगात्रं च पवित्रभोज्यं ॥ गानं च नृत्यं परिवारवर्गः । पुण्येन चैतत् सकलं लभेत ॥ १ ॥ द्वितीया मदनसुंदरी प्राह—शीलं च दानं विनयो विवेकः । सद्धर्मगोष्टिः प्रभुभक्तिपूजा ॥ अखंडसौख्यं च प्रसन्नता हि । लभ्येत पुण्येन समस्तमेतत् ॥ २ ॥ तत

श्रुत्वा राजादिसकलसभा सुरसुंदर्यां मदनसुंदर्याश्च प्रशंसां चकार. नृपसौभाग्यसुंदरीप्रमुखैः सुरसुंदर्याः प्रशंसा विशेषेण कृता, अन्यैर्विज्ञैः कैश्चिन्मदनसुंदर्याः स्तुतिः कृता, ततः सर्वे सभाजना निजनिजमंदिरे गताः, नृपोऽपि तयोः पाठकयोः स्तुतिं कृत्वा ताभ्यां विपुलं प्रीतिदानं च दत्वा तयोर्विसर्जनं चकार.

अथ कुरुजंगलदेशे शंखपुरीनामनगर्यासीत्, सा विपुलधनकनकधान्यभृताभूत्. तत्र महीपालनामा राजा बभूव, स उज्जयिनीराज्ञः सेवकः सदाचारदक्षः शूरवीरोऽस्ति. तस्य पुत्रोऽरिदमननामा कुमारो वर्त्तते, स रूपवान् लक्ष्मीवान् यशस्वी सर्वस्त्रीजनवल्लभः सुकुमारश्चास्ति. स प्रजापालनृपालस्य सेवार्थमागतोऽस्ति. एकस्मिन् समये सोऽरिदमनकुमारो राजसभायां समागतोऽस्ति. तदा तस्यां सभायां सुरसुंदरीकुमार्यपि राज्ञः समीपे स्थितास्ति. तया कुमार्या सोऽरिदमनकुमारः सहर्षं विलोकितः, परस्परं तयोः प्रीतिश्चाभूत्, तस्यारिदमनस्य कुमारस्योपरि सा सुरसुंदरी मोहिता. नृपेण तद् ज्ञातं, तदा तेन सुरसुंदरी पृष्टा, हे कन्ये! तव कं वरं करोम्यहं, तदा पुत्र्या प्रोक्तं हे तात! मम मनसि स्थितोऽरिदमनकुमारः श्रीमद्भिर्भवद्भिर्ज्ञातः, स एव वरः क्रियतां, एष म-

माभिप्रायः पश्चाद्भवतां यथारुचिस्तथा मे प्रमाणं, किंच त्वमेव मम पिता, त्वमेव कर्त्ता, त्वमेव पालकस्त्वमेव पोषकस्त्वमेवेश्वर इत्यादिवचनैः पितरं संतोषयित्वा सा सुरसुंदरी तुष्णिं स्थिता, तदा राज्ञा तयोः संबंधः कृतः, सर्वजनेषु चेयं वार्त्ता प्रसिद्धा जाता, यदरिदमनकुमारस्य सुरसुंदर्या सार्द्धं राज्ञा संबंधो विहितः, सौभाग्यसुंदर्या मनस्यपीदं कार्यं रुचितं. अथ द्वितीयदिने नृपेण मदनसुंदर्यपि समाहूता. साप्यागत्य नृपाय प्रणामं कृत्वा स्थिता; तदा राज्ञा सापि पृष्टा, हे कन्यके! कथय तव कं वरं करोमि? अत्र मम सेवार्थं बहवः कुमाराः समागताः संति, तेषां मध्याद्यथारुचि वरः क्रियते. तत श्रुत्वा लज्जया सा न किमपि वक्ति, पुनरपि राज्ञा पृष्टा, तथापि सा तु न ब्रूते. एवं वारंवारं पृष्टा सा मदनसुंदरी प्राह हे तात! भवतामग्रे कुलकन्या कथं कथयेद्यन्ममामुको वरः क्रियतामिति, इयं तु कुलटानां रीतिः, विवाहकाले मातापितरौ तु निमित्तभूतौ भवेतां, ततो यत्कर्मणि स्थितं तदेव सर्वं भवति, युष्मांकं कृतं किमपि न भवति. यद्भाव्यं तद्भवत्येव, इत्यादिसर्वज्ञवचनान्मम मनसि धैर्यं वर्त्तते. अहं तु मुखेन नैव कथयिष्यामि यन्ममैष एव वरः क्रियतामिति. मत्कर्मणि यस्य जीवस्य संबंधोऽस्ति स एव मम मिलिष्यति. तदा तया कन्यकया कर्मवादः प्रक-

टीकृतः, हे राजन्! भवतामपीदं राज्यं केन दत्तं? शुभकर्मणैव दत्तं, धनं धान्यं सौख्यं सर्वं शुभ कर्मणैव प्राप्यते, कर्मविनान्यः कोऽपि सुखदुःखयोर्दाता नास्ति, इत्यादिवचनं शास्त्रे वर्त्तते तद्विलोक्यतां, तदा राजा तद्वचनं श्रुत्वा महाकोपं कृतवान्. दुष्टेयं कन्यका महादुःखे मया निश्चितं पातनीयेति च मनसि तेन विचारितं. पुना राजा ब्रूते हे कन्यके! ब्रूहि कस्य प्रसादेन यथेष्टं सुखं त्वं भुंक्षे, तव भोजनराज्यसम्यगाभरणवस्त्रतांबूलगृहक्रीडादिकार्यं ममाधीनमेव वर्त्तते. मम राज्ये सति तव सुखं, ममाऽराज्ये च दुःखं, एवं सर्वत्र मम प्रसादोऽस्ति. अस्मिन् भूतलेऽहमेव कर्त्ता, न तु कर्म, सुखस्य दुःखस्य च दाताहमेव, अहं लोकेश्वरो लोकनाथोऽस्मि, अत्र यत्किंचित् कार्यं भवति तत्सर्वं ममाधीनमेव, अहं रंकं राजानं करोमि, राजानं च रंकं करोमि, एवं सर्वमपि कार्यं ममैव हस्ते वर्त्तते. हे पुत्रि! त्वं दुर्भागिण्यसि, पठितापि मूर्खा दृश्यसे, यत्स्वकीयं हठवादं न त्यजसि. अतस्त्वां महादुःखेऽहं पातयिष्यामि, यदा त्वां रोगयुक्तनिर्धनवराय समर्पयिष्यामि तदैव मम मनसि संतोषो भविष्यति. अधुनापि किमपि गतं नास्ति, अतो यथेष्टं वरं याचस्व, स्वमुखेनैवं च कथय? हे तात त्वमेव कर्त्ता, त्वमेव परमेश्वर इति. तत् श्रुत्वा मदनसुंदरी प्राह हे तात!

गर्वं मा कुरु, गर्वेण सर्वकार्यस्य हानिर्जायते, गर्वेण राज्यं गच्छति, कर्त्ता तु कर्मैव, न चान्योऽस्ति. एषा तव वार्त्ता मे हृदये कदापि न तिष्ठति, सर्वज्ञवचने रक्तचित्ताहं यादृशो वरो भविष्यति तादृशमेव वरं वरिष्यामि. तत् श्रुत्वा राज्ञा चिंतितं इयं कर्मवादे दृढचित्तास्ति, सभायां च मे हीलना जाता, दुर्बुद्धिपाठकेन तस्यै सभारंजनं न शिक्षितं, ध्रुवमियं बाला मंदमतिरस्ति. पुनर्मदनसुंदरी प्राह हे तात! काचित्कन्या दुःकुले दत्तापि सुखिनी जायते, काचिच्च सुकुले दत्तापि दुःखिनी जायते, तत्र तत्कृतकर्मैव हेतुरस्ति, न तु मातापितरौ. एवं तयोः परस्परं महाविवादे जायमानेऽवसरज्ञः सुबुद्धिनामा मंत्री क्रोधारुणलोचनं नृपं विलोक्यावादीत्, हे स्वामिन्ननया कन्यया सार्द्धं को वादो भवद्भिः क्रियते? अधुना वनपालकेन विज्ञप्तमस्ति यत्सांप्रतं वसंतसमये वनं प्रफुल्लितमस्ति अतस्तत्र गम्यतां, इति कथिते सत्यश्वपालकैरश्वस्तत्रानीतस्तदा राजापि तुरंगमारुह्य कतिपयजनैः सह चचाल नगराद्बहिश्चागतः.

इतोऽग्रभागे मार्गे गोब्लद्रजःसमूहं जनकोलाहलं च श्रुत्वा सुबुद्धिं प्रति राजा प्राह—हे मंत्रिन्! कस्य कोलाहलोऽग्रभागे श्रूयते? के आगच्छंति? तदा सुबुद्धिना कथितं हे प्रभो! अयं

कुष्ठिनां समूहोऽस्ति, पूर्वकृतकर्मवशात् समकालमेव सप्तशतानां मनुष्याणां समुदायः कुष्ठी जातोऽस्ति, एषामपि च राजरीतिर्वर्त्तते, राज्ञां समीपे च याचनां ते कुर्वंति. राजा प्राह केयं तेषां राजरीतिः? तदा सुबुद्धिना प्रोक्तं हे भूपाल! उंबररोगेण पीडित एषां स्वामी कश्चिद्राजपुत्र उंबराख्योऽस्ति, तस्योपरि छत्रं विराजते, चामरैश्च वीज्यमानोऽस्ति. गलितांगुलिनामा तस्य मंत्र्यस्ति, गलितसर्वांगो दुर्गपालोऽस्ति. सर्वे च तस्य सेवकाः कुष्ठिनो गलितत्वचो व्रणपूतिक्लिन्नाः कृमिकुलशतैरावृततनवो दुर्गंधवासिता वेसरारूढा महादुःखिनो मक्षिकाभिः संपन्नाः प्रेताकाराः साक्षान्नरयिका इवागच्छंति, एषां दर्शनमप्यशुभमतोऽग्रे न गम्यतां, एषां पवनस्पर्शनेनापि रोगोत्पत्तिः स्यात्, तेन कारणेन मार्गं त्यक्त्वान्यमार्गेण गम्यतां, तत् श्रुत्वा राजान्यमार्गेण चचाल. इतश्च कुष्ठिसार्थमध्ये तद्गलितांगुलिमंत्रिणा तत्स्वरूपं ज्ञातं, ततोऽसौ वेसरारूढो राज्ञः समीपे समागत्य कथयति, हे पृथ्वीपते तव कीर्त्तिः सकलेऽपि भूमंडले परिवर्त्तते. अस्माकं उंबरराणाप्रसादेन कस्यापि धनधान्यरत्नस्वर्णमणिमुक्ताफलस्य न्यूनता नास्ति. किं च मालवेश्वरस्य पार्श्वे यः कोऽपि यत्किंचिद्याचते तत्सर्वं स ददातीति तव कीर्त्तिरस्ति. अतो युष्मत्पार्श्वे यांचाकृते वयमत्र समागताः स्मः.

श्रीपा- अस्माकमूंवरमहाराजस्य भार्या नास्ति, अतो यादृशी तादृश्यपि भवद्भिरेका कन्यास्माकं राज्ञे प्र-
देया, वयमपि क्षत्रियाः कुष्टरोगेणेदृशा जाताः स्मः, तदस्माकं दूषणं कस्याग्रे कथ्यते, तत्र प्रतापो
ल च० महानस्ति, तत एवास्माभिः कन्या याच्यते. इति गलितांगुलेर्वचनं श्रुत्वा राजा किंचिद्विहस्य प्राह
११ भो गलितांगुले रोगिणे कथं कन्या दीयते? अन्यद्वस्तु यद्युज्यते तत्कथ्यतां, तदा पुनः स ग-
लितांगुलिः प्राह हे राजन् अन्यत्तु किमपि न युज्यते, परं त्वनेन तव वचनेन ते कीर्त्तिलोपो भ-
विष्यति, यत्र यत्र वयं यास्यामस्तत्र तत्र वयं कथयिष्यामो यन्मालवराट् याचकानां वांछां न पूर-
यतीति. अतस्तुभ्यं स्वस्तिरस्तु. तस्मिन् समये मदनसुंदर्या वचनं स्मृत्वा राज्ञा चिंतितमधुना मद-
नसुंदर्यास्तत्कर्मफलं दर्शयामि, तस्या निर्भाग्यमदनसुंदर्या एष ऊंवर एव वरो युक्तः, तथा च कु-
र्वतो मे कोपोऽप्युपशमिष्यति. एवं चिंतयित्वा राजा तं गलितांगुलिमवोचत्, भो गलितांगुले अ-
धुना त्वं स्वस्थानं गच्छ, युष्माभिरस्माकं सभायामागंतव्यं, तत्र यत्किंचिद्भाव्यं तद्भविष्यति. तत् श्रु-
त्वा गलितांगुलिः स्वस्थाने गतः, राजापि क्रोधवशेन पश्चाद्वलितः सभायामागत्य मदनसुंदरीं चा-
कार्येत्यब्रवीत्. हे पुत्रि अहं तु तव सुखं वांछामि, अतोऽद्यापि मन्यस्व, कथय च सुखं वा दुःखं पि-

तृकृतमेव लभ्यते इति. तत् श्रुत्वा मदनसुंदरी प्राह हे तात स्वभाग्येनैव सुखं च दुःखं च लभ्यते, न तु पितृकृतं, जिनवचनप्रामाण्यात्. तत् श्रुत्वा रुष्टो राजा मदनसुंदरींप्रति प्राह हे पुत्रि तव भाग्येनोंबराख्यराणकस्तव वरः समायातोऽस्ति, तदा मदनसुंदर्यवादीत् हे तात! चेन्मम भाग्येन स समागतोऽस्ति, तदा स सुखेनागच्छतु.

तदा राजा स्वसेवकं समाकार्य प्राह भो सेवक उंबराख्यराणकं शीघ्रमत्रानय, तदा स सेवकोऽपि तत्र गत्वा परिवारसहितं उंबरं च तूर्णमाकार्य राज्ञः समीपमानीतवान्. तदा राजा तं प्रत्याह हे उंबर इयं मे पुत्री मदनसुंदरी त्वां परिणेतुमिच्छति, अतो मया तुभ्यं सा दत्ता. तत् श्रुत्वा उंबरः स्माह हे राजन्! पुत्र्या समं युष्माभिर्विवादो न युज्यते. इयं तु सुरूपवती सुकुलोद्भवा चंद्रमुखी मृगराजकटी तरुराजविराजितजानुतटी वर्त्तते, अहं तु कुष्टी काकसमानः, अतोऽनया सार्धं मम संबंधो न युक्तः, किंचातस्तवापकीर्तिर्भविष्यति, क्षत्रियेष्वपि प्रवादो भविष्यति, अतोऽहं तां न गृहिष्यामि. भवत्कुलोद्भवा यादृशी तादृशी काचित्कन्या मे देया. तत् श्रुत्वा राजावोचत् हे उंबर! अहं किं करोमि? अस्या भाग्ये त्वमेव वरः, कर्मवादसमये त्वमेवागतः, ततः क्रोधाग्निना

ज्वलितेन राज्ञा सा मदनसुंदरी उक्ता हे पुत्रि! चेत्तव प्रतिज्ञा सत्या तर्हि इममूंवरं वरं वर? तत श्रुत्वा मदनसुंदर्यपि मनसि धैर्यं विधाय निजकरेणोंवरकरं पस्पर्श. तद् दृष्ट्वा सर्वे जना हाहारवं चक्रुः, परस्परमवदंश्च निर्भाग्येयं मदनसुंदरी यया दुष्टवचनकथनेन नृपः प्रकोपितः.

अथ स उंवरोऽपि तां मदनसुंदरीं वेसरारूढां कृत्वा परिवारयुतो निजस्थानके गतः, तदा लोका मदनसुंदर्या अपवादं चक्रुः—केऽपि निंदंति जननीं। केऽपि निंदंति पाठकं ॥ निंदंति धर्मं केचिच्च। पितरं कोऽपि निंदति ॥ १ ॥ सुरसुंदर्याश्च लोकाः प्रशंसां चक्रुः, लोकैस्तु वर्त्तमानकाले यादृशं दृश्यते तादृशमेव कथ्यते. अथ राजा निजापवादं श्रुत्वा शिवभूतिकोविदमाकार्याब्रवीत्, भो शिवभूते सुरसुंदर्या विवाहलग्नं शीघ्रं विलोकय, तदा शिवभूतिः प्राह हे राजन् अस्मिन् मासे यत्किंचिच्छुभं लग्नं तत्तु मदनसुंदर्या विवाहदिवसे गतं, अधुना शीघ्रं लग्नं तु नास्ति. तदा राज्ञा कथितं यादृशं तादृशमपि शीघ्रं लग्नं विलोकय? तदा तेन लग्नं विलोकितं. अथ राज्ञा सुबुद्धिमंत्रिणमाहूय कथितं भो मंत्रिन् कन्याविवाहयोग्यां सामग्रीं प्रगुणीकुरु? तदा मंत्रिणा स्थाने स्थाने विवाहमहोत्सवः प्रारब्धः, नगर्यां गृहे गृहे तोरणपताकागीतगाननृत्यवादित्रतालकंसालपटह-

मुरजादिभेरीझल्लरीरवः प्रादुर्भूतः, पणांगना नृत्यं चक्रुः, भट्टा बिरुदावलिं प्रोचुः, चारणजना जयजयशब्दांश्चक्रुः, सर्वे ज्ञातीयगोत्रियाः समागताः, सधवानार्यस्तत्र गानं विदधुः, एवं तत्र महोत्सवे जायमाने सति अनेकराजानः संमिलिताः, लग्नावसरोऽपि निकटे समागतः, पीठमर्दका अरिदमनकुमारस्य सुगंधतैलाभ्यंगादिक्रियां कुर्वंतिस्म. अरिदमनकुमारोऽपि नानाभरणवस्त्रादिकलितललितगात्रः सन् अनेकराजराजेश्वरगणनायकदंडनायकमंत्रिमहामंत्रिश्रेष्ठिसार्थवाहादिपरिवारेण परिवृतो वेणुवीणादिविचित्रवाजित्रसमूहेन परिकलितो गजारूढः सन् छत्रमुकुटचामरैर्विराजमानस्तोरणं वंदित्वा याचकेभ्यः प्रभूतं दानं च दत्वा चत्वरिकामंडपं प्रविवेश. सुरूपा मनोरमा चंद्रवदना सुरसुंदरीकन्यापि सालंकारा सती महताडंबरेण तत्र प्राविशत्. तदा तत्र तयोर्हस्तमेलापकं कृत्वा वह्निसाक्षिकं याज्ञिको विवाहविधिं चकार. बलिभुग्भिः पांचजन्यः पूरितः, प्रजापालभूपालोऽपि करमोचनावसरे विपुलधनधान्यरत्नसुवर्णगजाश्वदासदासीनगरग्रामादि अरिदमनकुमाराय दत्तवान्. अतः प्रजापालनृपस्य महद्यशो विस्तीर्णं, लोके च तस्य महान् महिमा जातः, परस्परमधिका प्रीतिर्जाता. ततोऽरिदमनकुमारोऽपि राज्ञः शिक्षां मार्गयित्वा स्वपुरींप्रति प्रस्थानमकरोत्. सुरसुंदरीकन्यापि

निजमातरमापृच्छ्य पितरं च प्रणम्य मातृपितृदत्तां शिक्षां गृहीत्वा स्वभर्त्रा सह चचाल. सप्तशत-
क्रोशमार्गं समुल्लंघ्यारिदमनकुमारः शंखपुरीपरिसरोद्याने स्थितिं चकार. पार्श्वस्थाः सेवकाः पुरमध्ये
स्वस्थानेषु गताः, स्तोकेन परिवारेण परिवृतः कुमारः सुरसुंदर्या सहितस्तत्रैव स्थितः.

॥ इति श्रीश्रीपालचरित्रे गद्यबंधे प्रथमः प्रस्तावः समाप्तः ॥ श्रीरस्तु ॥

---

अथोंबरमहाराजो मदनसुंदरींप्रति तत्परीक्षार्थमिति वचनमवोचत्, हे प्रमदे तव तातेनायुक्तं कार्यं कृतं, यन्मह्यं कुष्टिने त्वं दत्ता. त्वं तु राजहंसीसदृशी अहं तु काकसदृशस्तत आवयोः परस्परं संबंधो न युक्तः, अद्यापि ते किमपि गतं नास्ति, कोपेन राज्ञा त्वं मम समर्पितासि, त्वयापि कर्मवादेन मे करस्पर्शः कृतः, किं तु मच्छरीरे महती रोगोत्पत्तिर्वर्त्तते, अतो मया प्रोच्यते यत्त्वं विवाहादिसंबंधमन्यपुरुषेण सार्द्धं कुर्विति. तत् श्रुत्वा मदनसुंदरी स्वनयनाभ्यामश्रूणि विमुच्य निजपतिंप्रति प्रोवाच, हे नाथास्मिन्न भवे त्वमेव मे भर्त्ता, त्वमेव मे भरणपोषणादिकर्त्तासि, अहं सुशीला धर्मदृढचित्ता कदापि त्वां न त्यजिष्ये. दैवयोगात्कदाचित्कनकगिरिश्चलति, सागरो मर्या-

दां त्यजति, तथाप्यहं शीलान्न चलामि, अतो युष्माभिरियं वार्त्ता पुनः कदाचिदपि न कर्त्तव्या. उंबरोऽपि दृढचित्तां तां वीक्ष्य तया सह स्त्रीसंबंधं कृतवान्. रात्रौ मदनसुंदरी उंबरश्च सुखेन निद्रां चक्रतुः. अथ प्रातर्भानावुदिते सति मदनसुंदरी स्वपतिंप्रतीत्युवाच, हे नाथात्र नगरे श्रीऋषभदेवप्रभोर्मंदिरमस्ति, तत्र दर्शनार्थं गछावः, अतः शीघ्रं स्नानं विधाय पुष्पाक्षतादि गृहीत्वा भावपूर्वकं भवद्भिर्मया सार्धमागंतव्यं, इति कथिते उंबरोऽपि सर्वसामग्रीं कृत्वा श्रीप्रथमतीर्थंकरस्य मंदिरंप्रति चचाल. तत्र गत्वा जिनं च वंदित्वा प्रभोः स्तुतिं कर्त्तुमुत्सुका मदनसुंदरी निजनाथंप्रति प्राह हे स्वामिन्नहं भावेन स्तुतिं करोमि ततो भवद्भिः श्रोतव्या. इत्युक्त्वा सेछं प्रभोः स्तुतिं चकार—हे आदिनाथ हे देवाधिदेव हे परमेश्वर हे त्रिलोकनाथ हे वीतराग हे वीतक्रोध हे वीतमान हे वीतमाय हे वीतलोभ हे दीनबंधो हे कृपागाधसिंधो हे त्यक्तसंग हे पारगत हे शंभो हे जिनेश्वर नौ त्वमेव शरणं, कथं भूतस्त्वं सुरासुरनरवृंदसेवितपादपद्मः चंद्रोज्ज्वलकेवलेन सकललोकालोकभावप्रकाशकः मेयामेयपदार्थसार्थदुर्घटार्थपारावारपारीणोऽसि, हे जगत्पूज्य भवे भवे त्वमेवावयोः शरणं त्वमेवाधारस्त्वमेव रोगशोकविनाशकोऽसि, हे विश्वंभर हे विश्वनाथ सकलकलागु-

श्रीपाल
चरित्र
१७

णगणारामविकसनधाराधरधारासमान हे प्रभो आवयोराधिव्याधिहरणे त्वमेव समर्थः, सतां मान्यः, निजसेवकेभ्यो विमलशिवसुखदायकोऽसि, हे तरणतारण भवंतं पश्यतोरावयोर्दुष्टकुष्टादीनामद्यैव शांतिर्जाता, इत्यादि स्तुतिं विधाय मदनसुंदरी विरराम. कुंवरेणापि सा स्तुतिर्भावेन श्रुता. तस्मिन् समये चक्रेश्वरीदेवीप्रेरितपुष्पमालाश्रीफले च झटिति प्रभोः कंठादागत्य तयोरंकयोः पतिते. तद् दृष्ट्वा मदनसुंदरी प्राह हे स्वामिन् प्रभोः प्रसादाद्युष्माकं रोगो गतः, श्रीफलं च भवद्भिर्ग्राह्यं, मालां त्वहं गृह्णामि. एवं प्रभोरतिशयं दृष्ट्वा पुनर्वंदनां कृत्वा तौ दंपती जिनमंदिरान्निर्गतौ. तत आसन्नोपाश्रये तौ समागत्य श्रीमुनिचंद्रमुनिं भावेन नत्वोचितस्थाने समुपविष्टौ, मुनिरपि सभायां धर्मोपदेशं ददाति—

धर्मात्सुखं दुःखदायश्च ज्ञेयो । धर्मेण राज्यं सुकुलोद्भवः स्यात् ॥ धर्मस्य सेवा सफला सदैव । धर्मे प्रयत्नो मनुजैर्विधेयः ॥ १ ॥ इत्यादि धर्मकथां मुनिमुखात् श्रुत्वा केचिद्भव्यास्तत्रैव स्थिताः, केचिच्च स्वगृहं गताः. अथ मुनिचंद्रमुनिना पूर्वपरिचयान्मदनसुंदरी पृष्टा, हे श्राविके कोऽयं त्वया सह शुभलक्षणः पुरुषोऽस्ति? तदा मदनसुंदरी स्वनेत्रयोरश्रूणि पातयंती गुरोरग्रे राज्ञा सह कृत-

कर्मवादादिसकलं स्वरूपं विस्तरतः कथयामास. पुनरप्युवाच हे गुरो मे मनसि कोऽप्यन्यः खेदो नास्ति, परंतु मिथ्यात्विलोका जिनशासनस्य हीलनां कुर्वंति, मिथ्याधर्मस्य च प्रशंसां कुर्वंति, ततोऽस्य भवतां श्रावकस्य रोगोपशमनाय कोऽप्युपायः कथ्यतां. तत् श्रुत्वा मुनिचंद्रगुरुरपि भाविधर्मलाभं विज्ञाय तस्यै धर्मोपायं कथयामास. हे भद्रे पूर्वकृतकर्मविनाशको निष्पापाचरणरूपश्चतुर्दशपूर्वसार इहलोकपरलोकसुखकरः सर्वधर्मसारो दुष्टकष्टहरो ज्वरहरः पुत्रधनधान्यराज्यप्रतापकरः आधिव्याधिशोकसंतापदौर्भाग्यवंध्यत्वविषकन्यत्वविषापहारकः शिवंकरश्चेदृशो नवपदाराधनरूपोपायो जिनधर्मे वर्त्तते, अतो हे वत्से त्वं भर्त्रा सह श्रीनवपदाराधनं भक्त्या कुरु, तेनास्य दुष्टकुष्टरोगस्यापि शीघ्रं नाशो भविष्यति. तन्नवपदनामानि चेत्थं—प्रथममर्हत्पदं १ द्वितीयं सिद्धपदं २ तृतीयमाचार्यपदं ३ चतुर्थमुपाध्यायपदं ४ पंचमं साधुपदं ५ षष्टं दर्शनपदं ६ सप्तमं ज्ञानपदं ७ अष्टमं चारित्रपदं ८ नवमं तपःपदं ९ इति जिनशासने परमतत्वभूतं नवपदयंत्रमस्ति. एभिर्नवपदैर्विद्याप्रवादपूर्वाम्नायाद्रचितं सिद्धचक्रयंत्रं भवति. तच्च सर्वेंद्रचंद्रनागेंद्रनरेंद्रादिसेवितमस्ति. किंच जिनशासने ये नराः सिद्धाः सिद्ध्यंति सिद्धिं यास्यंति च ते सर्वे श्रीसिद्धचक्रप्रभावेणेति ज्ञेयं, तर्हि रो-

गस्य विनाशे का वार्त्ता? अतः शुभभावेनास्याराधनं युवां कुरुतं, येन सर्वशांतिर्भविष्यति. पुनः श्रीसिद्धचक्रस्याराधनेन त्रिलोक्याः प्रभुत्वमपि प्राप्यते. परं तस्याराधकः शांतो दांतो जितेंद्रियो भक्तियुक्तो गुरुभक्तिरतः परमपदासक्तस्तपःसंयमरक्तः क्रोधमानमायालोभमुक्तो निश्चलचित्तो जितनिद्रः स्थिरासनो युज्यते, पूर्वोक्तगुणरहितस्य विराधकस्य नरस्य सिद्धचक्रपूजनफलं न भवेत्, यादृशे तादृशे मनुष्येऽयमाम्नायो देयोऽपि न, सिद्धचक्रस्य सेवनात्सर्वापदो विलयं यांति. आश्विनशुक्लसप्तमीवासरादारभ्य पूर्णिमां यावदिदं तपो भवति. तत्र व्रते प्रतिदिनमष्टप्रकारजिनपूजापूर्वकमाचाम्लतपःसहितं परमभक्त्या विधिर्विधेया. नवमे दिने पंचामृतैः सहर्षं सादरं यथास्यात्तथा सविस्तरं महती जिनपूजा कार्या. एवं चैत्रमासेऽपि तत्पूजनविधिः कार्या, नवपंक्तिभिरेकाशीत्याचाम्लैः सिद्धचक्रव्रतं संपूर्णं भवति. तद्व्रतं प्रतिवर्षं वारद्वयं कर्त्तव्यं. सार्द्धचतुर्वर्षांते तस्मिन् व्रते संपूर्णे जाते सति सहर्षं तस्योद्यापनं करणीयं, तस्य विधिरग्रे कथयिष्यते. एवं श्रीसिद्धचक्राराधनतः सकलसमृद्धिबुद्धिवृद्धिसिद्धिपरमपदप्राप्तयश्च भवंति. नराणां नारीणां च कासश्वासज्वरभगंदरकुष्टकुष्ठादिरोगाणां च नाशो भवति, पुत्रपौत्रादिपरिवारवृद्धिश्च भवति. एवं श्रीसिद्धचक्राराधनविधिफले

च मया युवयोरग्रे दर्शिते. अथ गुरुणा तत्र स्थितेभ्यो भावशुद्धश्रावकेभ्य इदं वचनमुक्तं, भो श्रावकाः साधर्मिकाणां वात्सल्यं क्रियतां, तत् श्रुत्वा श्राद्धैर्महतादरेण उंबरमदनसुंदरीभ्यां धनधान्यसंपूर्णं मनोरमं महद् गृहं तयोर्निवासाय दत्तं, तत्र तौ दंपती सुखेन कालं निन्यतुः, गुरुवचनेन मदनसुंदरीवचनेन च उंबरकुमारः सिद्धचक्रस्य पूजाभ्यासं कृतवान्, प्रतिदिनं गुरोर्मुखाद्व्याख्यानं च श्रुतवान्. मदनसुंदर्या सार्द्धं धर्मध्यानं च कुर्वन् गुरवे वस्त्रपात्रादिदानं यच्छन् कतिपयदिनानां समूहे गते सति शुभमुहूर्त्ते आश्विनमासे शुक्लसप्तमीदिनाद्व्रताराधनं मदनसुंदर्या सह कृतवान्. तत्रैव मंदिरे तेन पूजा प्रारब्धा, मुनिचंद्रगुरुणा प्रतिष्ठितश्रीसिद्धचक्रयंत्रं विधिपूर्वकं गृहीत्वा श्रीऋषभदेवस्य मंदिरे स्थापितं, अष्टप्रकारपूजनमाचाम्लसहितं गुरुदत्ताम्नायेन भार्यया सहोंबरकुमारः कृतवान्. तदा मदनसुंदर्या च श्रीऋषभदेवप्रभोः सिद्धचक्रयंत्रस्य च स्नात्रजलं गृहीत्वा तत्स्वभर्तृशरीरे सिंचितं, ततस्तद्दिनादेव तस्य रोगोपशमनं जातं, द्वितीयदिने सविशेषं रोगशांतिर्जाता, एवं दिने दिने रोगस्य सविशेषा शांतिरभूत्. नवमे दिवसे मदनसुंदर्या सहोंबरः सिद्धचक्रस्य पंचामृतेन महाविस्तरेण पूजां विधाय भावस्तवं च कृतवान्. तदा मदनसुंदरी तत्स्नात्रजलं भावपूर्वकं

गृहीत्वा तेन पत्युः सर्वांगं सिंचयामास. तत्सेचनतस्तदैव दुष्टकुष्टरोगः सर्वथा गतः.

अथोंवरस्य रोगरहितं दिव्यरूपं निरीक्ष्य सर्वेषां लोकानां महदाश्चर्यं जातं, तदा गुरुभिरुक्तं भो लोका अत्र किमाश्चर्यं, श्रीसिद्धचक्रप्रभावेण ग्रहगणदोषभूतशाकिनीडाकिनीराक्षसव्यंतरादि भयो न भवति, शुद्धभावयुतां भव्यानां पुनरस्य प्रभावेण भयाष्टकक्षयो भवति, भगंदरवातपित्तकफोद्भवा रोगा न प्रभवंति, अस्य पूजनेन वंध्यानां स्त्रीणां पुत्रोत्पत्तिः स्यात्, मृतवत्सारोगदुषितानां प्रमदानां पुत्राश्च जीवंति, पुनरस्य सेवनेन दुष्टग्रहा अपि शांतिभावं गच्छंति, राजा वशीभवति, स्त्रीभर्त्रोरानुकुल्यं भवति, अस्य प्रभावेण मुनयो मुक्तिं यांति, अस्य श्रीसिद्धचक्रस्यागमेषु बहवः प्रभावा वर्णिताः संति, तेषां मुखेन वर्णनं कर्तुं न पार्यते. एवं श्रीगुरुमुखात्तत्प्रभावं श्रुत्वा प्रत्यक्षं च तत्प्रभावाश्चर्यं दृष्ट्वा लोका अत्यंतं हर्षं प्राप्ताः. ततो मदनसुंदरी श्रीसिद्धचक्रस्नात्रजलं गृहीत्वा सप्तशतकुष्टिनां समीपे समागत्य तेषां शरीरेषु तज्जलसेचनमकरोत्, तैरपि भावपूर्वकं श्रीसिद्धचक्रप्रभावस्वरूपं ज्ञातं. यतस्तज्जलसेचनस्ततत्क्षणादेव तेषां कुष्टरोगो विनाशं प्राप्तः, सर्वेऽपि सुंदरशरीरधारिणः संजाताः, लोके मदनसुंदर्याः प्रशंसा बभूव, धर्मस्य गुरोश्चापि महिमा जातः,

अथ मदनसुंदरी स्वभर्तृरूपं रोगरहितं दृष्ट्वा गुरोः स्तुतिं चकार, हे गुरो अयं सर्वः प्रसादो युष्माकमेव, मे पत्युः पूर्वकृतकर्मसमुद्भूतकुष्टरोगदूरीकरणे त्वमेव समर्थः, नान्यः कोऽपि, हे तरणतारण युष्माभिर्मह्यं समीचीनोपायो दत्तस्ततो मम सर्वाण्यपि दुःखान्यद्यैव विलयं प्राप्तानि. एवं गुरोः स्तुतिं कृत्वा मदनसुंदरी उंबरश्च स्वस्थाने जग्मतुः.

अथान्यस्मिन् दिवसे उंबरकुमारो जिनदर्शनं कृत्वा मंदिराद्विनिर्गत्य मार्गेऽर्धजरतीं निजजननीं दृष्ट्वा जहर्ष. मातुः पादयोः स पपात, मातापि सहर्षं तस्यालिंगनं चकार. तदा उंबरोऽपि हर्षाकुलित उवाच हे मातस्तव वधूप्रसादेन मे रोगो विनाशं गतः. अथ मदनसुंदर्यपि तयोरेवंविधां वार्त्तां श्रुत्वा परस्परं मातृपुत्रभावं ज्ञात्वा सद्य एव निजश्वश्रूचरणकमलयोः पपात, श्वश्र्वाशिषं ददौ हे सुशीले त्वं पुत्रवती सौभाग्यवती भव, युवयोर्युगलमखंडं भवतु. ततस्ते त्रयोऽपि निजगृहे समागताः, अथ कुमारेण माता पृष्टा हे मातस्त्वं मां मुक्त्वा कुत्र गतासीः, तत्स्वरूपं निवेदय? तदा माता प्राह हे पुत्र अहं वैद्यशुद्ध्यर्थं कौशांब्यां गता, तत्र च मया लोकेभ्यस्तच्छुद्धिः पृष्टा, तैरुक्तं वैद्यस्तु तीर्थयात्रायां गतोऽस्ति, अतस्तुभ्यं क औषधं दास्यति? तत श्रुत्वा मनसि चिं-

तातुराहं तत्रैव स्थिता. तत्र प्रतिदिनमहं श्रीजिनमंदिरं गतवती, तत्र च दांतः शांतो जितेंद्रियः करुणारससागरो ज्ञानी ध्यानी धर्मोपदेशकश्च ईदृशो मुनिर्मया दृष्टः, तं मुनिं वंदित्वा मया पृष्टं हे मुने! मम पुत्रः कदा रोगरहितो भविष्यति? तदा तेन मुनींद्रेणोक्तं हे भद्रे स ते नंदन उज्जयिन्यां त्वया कुष्ठिसमूहे समर्पितस्तेषां संगात्सोऽपि कुष्ठरोगेण पीडितोऽभूत्. तैः कुष्ठिभिरपि मिलित्वा तस्योंबराख्यां विधाय स्वनायको विहितः, स ते पुत्रोऽधुना मालवाधीशप्रजापालनृपस्य मदनसुंदरीनामपुत्रीं परिणीतोऽस्ति. तत्र तेन तव पुत्रेण श्रीमुनिचंद्रगुरुवचनेन राजसुतावचनेन च श्रीसिद्धचक्रस्याराधनं कृतमस्ति. तस्याराधनेन स रोगरहितः जात्यसुवर्णवर्णशरीरो मदनसुंदर्या सह साधर्मिकैः प्रदत्तधनधान्यसंपूर्णे मनोहरे गृहे स्थितोऽस्ति. एवं ते कुमारोऽद्याप्युज्जयिन्यामेव वर्त्तते, तत्र गतायाश्च तव स मिलिष्यति. एवं हे पुत्र! मुनिमुखादिदं वचनं श्रुत्वा तव स्वरूपं च तथाप्रकारं ज्ञात्वा मुनिं वंदित्वा जिनं च नत्वा तूर्णं कौशांबीनगरादहमत्राधुनैव समागतास्मि. इतो मार्गे वधूसहितो मया त्वं दृष्टः. तदा कुमारो मातरं प्राह हे मातः संप्रति त्वमपि दर्शनार्थं जिनगृहे आगच्छ? ततः सापि उंबरमदनसुंदरीभ्यां सह प्रथमजिनस्य मंदिरे गत्वा तत्र जिनं च न-

त्वा तत्स्थानात्ते त्रयोऽपि समुदायोपाश्रये मुनिचंद्रगुरुपार्श्वे गत्वा तं नत्वा धर्मं च श्रुत्वा गृहे गत्वा धर्मसंबंधिकार्याण्येव प्रायेण चक्रुः.

अथान्येद्युस्ते त्रयोऽपि भावेन जिनपूजां कृत्वा भावस्तवनं कुर्वंति. इतो रूपसुंदरी राज्ञी प्रजापालनृपालात्कलहं कृत्वा निजभ्रातृगृहे गत्वा शोकाकुला स्थितास्ति. कतिपयदिनैरागमवचनैश्च शोकं विहाय श्रीऋषभदेवप्रभुदर्शनार्थं तन्मंदिरेऽगछत्. तत्र देवकुमारसदृशरूपयुतेन कुमारेण सह भावस्तवं कुर्वतीं स्वपुत्रीं मदनसुंदरीं विलोक्य तस्या मनसि महती शंका समुत्पन्ना. ततः सा स्वकीये हृदये एवं चिंतयामास, किमियं मम पुत्री मदनसुंदरी वा काचिदन्या कन्या वर्त्तते? इति स्वमनसि संदेहं कृत्वा सम्यक्प्रकारेण तां निरीक्ष्य सा समुपलक्षिता, तदा तया मनसि विचारितं किं मम पुत्र्या मदनसुंदर्या तं कुष्टिनं भर्त्तारं परित्यज्य कोऽप्ययं नवीनः पतिः कृतोऽस्ति? अहो कर्मणां गतिर्विचित्रा वर्त्तते, कर्मवशो जीवः किं किमकार्यमपि न कुरुते? ध्रुवं तया तं कुष्टिनं त्यक्त्वान्यो भर्त्ता कृतो विलोक्यते. परं तु सा मम पुत्री कुशीला नास्ति, सा तु जिनमतनिपुणास्ति, न ज्ञायते किमत्र जातमस्ति, स कुष्टी वरः कुत्र गतः, कदाचित् स एवायं भविष्यति,

परं स कथं रोगरहितो जातः? एवं सा रूपसुंदरी स्वमनसि संकल्पविकल्पानि कल्पयामास. स्वयं च विलक्षवदना जाता, जिनदर्शनमपि तया विस्मृतं. पुनस्तया स्वमनसि चिंतितं, अनया मे कुपुत्र्या निश्चितं मे निर्मले कुले कलंको दत्तः, जिनमते च दूषणं दत्तं, यदनया परिणीतकुष्टिपतिं परित्यज्य अन्यः कश्चिद्भर्त्ता कृतोऽस्ति. एवं नीचकार्यकरणतः सा मृतैव वरं, अनया जीवितया सत्यं सर्वत्र स्थानेऽस्माकं हीलना कृता, मम कुक्षिरपि लोकनिंद्या बभूव. इत्यादिबहुप्रकारैः स्वमनसि खेदं कुर्वती मंदस्वरेण सा रूपसुंदरी तदा तत्रैव जिनमंदिरे रुदनं चकार—

एवं दीनस्वरेण रुदंतीं निजमातरं वीक्ष्य तस्या मनोगतं भावं च विज्ञाय मदनसुंदरी समवोचत्—हे मातरद्य हर्षस्थाने त्वया केन कारणेन मनसि खेदः क्रियते? स एवायं पितृदत्तो मम कुष्टिभर्त्तास्ति, त्वं शंकां मा कुरु? भावेन सिद्धचक्राराधनात्तस्य सर्वोऽपि रोगो विनाशं प्राप्तोऽस्ति. अत्र जिनमंदिरे सत्संबंधिसर्वसांसारिकवार्त्ताकथनतो नैषेधिकीदोषः संभवेत्, अतस्त्वं चैत्यवंदनं विधाय चैत्यबहिःप्रदेशे समागच्छ? तत्र तुभ्यमहं सर्वमपि स्वरूपं कथयिष्यामि. कुमारमातापि तां प्रति प्राह हे संबंधिनि तव पुत्री महासत्यस्ति, कदाचिद्दैवयोगात्सूर्योऽपि पश्चिमदिशि समुदेति,

सागरोऽपि स्वमर्यादां त्यजति तथापि तव कुक्षिसंभवा ते पुत्री स्वधर्मान्न चलति. तत् श्रुत्वा हर्षिता सा रूपसुंदरी त्वरया जिनमंदिरे प्रभोरग्रे चैत्यवंदनादिविधिं कृत्वा तस्माद् बहिर्निर्गता, एवं ते त्रयोऽपि तथैव बहिरागताः, तदा कुमारजननी सहर्षा रूपसुंदरींप्रति प्राह युष्माभिरस्माकं गृहे समागम्यतां, तदा सर्वेऽपि हर्षप्रफुल्लितमानसास्तत्रागताः, तत्र च मदनसुंदर्या स्वमातुरग्रे सविस्तरं सिद्धचक्राराधनसर्वस्वरूपं कथितं. श्रुत्वात्यंतं हर्षिता रूपसुंदरी कुमारजननींप्रति प्राह इदं सकलं स्वरूपं मया ज्ञातं, अधुना तु प्रसद्य कुमारस्य वंशादिस्वरूपं यूयं कथयत, यतस्तच्छ्रवणे मम महत्युत्कंठा वर्त्तते. तदा कुमारजननी कमला प्राह—

अंगदेशे चंपानाम्नी नगरी बभूव, तत्र सिंहरथो नामा राजा राज्यं करोतिस्म. तस्य कुंकणनृपभगिनी कमलप्रभानाम्नी पट्टराज्ञ्यस्ति. अनेकदेवदेव्याराधनेन तस्या वृद्धत्वे एकः पुत्रोऽभूत्. तस्य पुत्रस्य श्रीपाल इत्यभिधानं कृतं. तस्मिन पुत्रे द्विवार्षिके जाते सति तस्य पिता सिंहरथराजा शूलरोगेण पंचत्वं प्राप्तः. एवं भर्त्तुर्वियोगेनात्यंतं विलापं कुर्वतीं मां मतिसागरनामा गुणवान् मंत्री त्यवोचत्. हे मातरथ शोकं मा कुरु? तव पुत्रोऽप्यधुना बालोऽस्ति, तथापि चेत्तवाज्ञा तदाहं तं पु-

त्रं राज्ये स्थापयामि. मयापि तस्य वचनतः शोकं विसृज्य तत् प्रतिपन्नं. मंत्र्यपि च श्रीपालकुमारं राज्ये स्थापयित्वा सुखेन राज्यं पालयतिस्म. मंत्रिणा सर्वे स्थानेषु महती प्रतिष्टा कृता. एवं वर्षद्वये गते सति श्रीपालपितृव्योऽजितसेनो राज्यलोभाक्रुष्टः सन् सर्वत्र राज्यभेदं कृत्वा सामंतादिराजपुरुषान् दानादिना स्ववशीकृत्य मां मतिसागरमंत्रिणं श्रीपालं च व्यापादयितुं चिंतयामास. तद्राज्यभेदः केनचित्प्रकारेण मतिसागरमंत्रिणा विज्ञातस्ततस्तेन मम समीपे समागत्य तत्सकलमजितसेनस्वरूपं निवेदितं, कथितं च हे मातः संप्रति पुत्ररक्षार्थं तं गृहीत्वा शीघ्रमितः स्थानाद्व्रज? यतो ' जीवन्नरो भद्रशतानि पश्यति ' इति नीतिवाक्यं वर्त्तते. अहमप्यद्यैव कुत्रापि गछामि इत्युक्त्वा स गतः.

अथाहमपि मनसि धैर्यं धृत्वा धर्मध्यानैकमानसा सायंकाले पुत्रं कटीतटे गृहीत्वा गुप्तरीत्या नगरान्निर्गत्य भयंकरे वने प्रविष्टा. कदाचिदप्यदृष्टवनमार्गाहं महाकष्टमनुभवंती रात्रौ वनमध्ये एवेतस्ततोऽभ्रमं. तस्मिन्नवसरे कंटकाकुले व्याघ्रसिंहादिक्रूरश्वापदोपेतेऽरण्ये भ्रमत्या मया यद्दुःखं सोढं तद् ज्ञानिनामेव गम्यं. एवं पूर्वसंचितकर्मफलं तदैव समकाले ममोपर्यापतितं. परंतु धर्मध्या-

नैकमानसाहं रात्रौ वनमुल्लंघ्य प्रजाते मार्गे पतिता. तदैव सूर्योदये जाते सति सप्तशतकुष्टिनां सार्थो मम मिलितः, तं दृष्ट्वा प्रथमं त्वहं भीता कंपमाना तत्रैव स्थिता. तदा तैः कुष्टिभिरुक्तं हे सुरूपे त्वं जयं मा कुरु? त्वं कासि कुतश्चात्र मार्गे समागतासि? त्वं सर्वं सत्यं कथय? त्वया मनागप्यस्माकं भयो न कर्त्तव्यः, वयं तु तव सहोदरीजूताः स्मः, इति तेषां मिष्टवचनानि श्रुत्वा मया चिंतितमेतेषां जयो नास्ति. ततो मया स्वकीयः सर्वोऽपि वृत्तांतस्तेषामग्रे कथितः, तैराश्वासिताहमपि निश्चला जाता. विचारितं च मया संप्रति एतान् कुष्टिनो विना ममान्यं शरणं नास्ति, एवं विचिंत्य मया तेभ्यः प्रोक्तं हे कुष्टिनो यूयमावयोरजितसेनाद्रक्षां कुरुत. तत् श्रुत्वा तस्मात्कुष्टिसार्थादेकेन कुष्टिना समागत्य मम पुत्रं च गृहीत्वैकस्य वेसरस्योपरि स्थापितः पटेनाच्छादितश्च. ततोऽहमपि वेषपरावर्त्तं कृत्वा पुत्रं चांके स्थापयित्वा पटाच्छादितशरीरा तस्यैव वेसरस्योपरि समारूढा. तदा मया चिंतितमद्यापि मे किंचित्पुण्यमस्ति, येनेयं सर्वसामग्री प्रादुर्जूता.

इतस्तत्राजितसेनस्याश्ववारा मार मार शब्दं कुर्वंतः समागताः, कुष्टिनश्च पप्रच्छुः हे कुष्टिनः काचित्सुंदराकारा सपुत्रा नृपराज्ञी युष्माभिर्दृष्टा? तैरुक्तमस्माभिस्तु नैव दृष्टा, वयं तु पूर्वकृतकर्मा-

नुसारेण रोगिणः स्म, भवद्भिरस्माकं पार्श्वेऽप्यागंतुं न युक्तं, यतोऽस्माकं पवनेनापि भवतां रोगोत्पत्तिर्भविष्यति, तत् श्रुत्वा तैश्चिंतितमेते कुष्टिनः सत्यं वदंति, कदाचिदेतेषां संगेनास्माकं रोगो भविष्यति तदा नः का गतिः? तदवसरे राजाप्यस्मत्तो दूरं यास्यति. किंचैते कुष्टिनः सर्वे संमिलिता भिक्षार्थं गच्छंति, इति विचार्य ते तु शीघ्रमेव तत्स्थानात्पलायिताः, अहं च निर्भया सुखेन तेषां मध्ये स्थिता.

अथ तैः कुष्टिभिर्मे पुत्रो निजनायकः कृतः, अनुक्रमेण स यौवनाभिमुखो जातस्तदा कर्मदोषेण सोऽपि तेषां संगेन कुष्टरोगेण पीडितोऽभूत्. मया च तस्य बहवोऽप्युपचाराः कृतास्तथापि तस्य रोगशांतिर्न जाता. ये केऽपि जना मार्गे मम मिलंति तेषां रोगोपायं पृच्छामि. एकदा केनचित्प्रोक्तं भो भद्रे कौशांब्याख्यनगर्यां महारोगहरोऽष्टादशकुष्टोपायविज्ञ एको वैद्योऽस्ति, ततस्तत्र त्वं गच्छ? इति श्रुत्वा पुत्रं च तेभ्यः कुष्टिभ्यः समर्प्याहं वैद्यानयनार्थं शीघ्रं कौशांबीपुरींप्रति चलिता. कतिचिद्दिनैः प्रयाणं कृत्वा तस्यां नगर्यां प्राप्ता, तत्र गतया च मया लोकेभ्यो ज्ञातं यद्वैद्यस्तु तीर्थयात्राकृते गतोऽस्ति. तत् श्रुत्वाहं तु महादुःखं प्राप्ता. परंतु तत्रस्थमुनिवचनात् पुत्रस्य

रोगोत्पत्तिविनाशादिवृत्तांतं श्रुत्वा हर्षिता शीघ्रं कौशांबीं नगरीं त्यक्त्वात्र पुत्रशुद्ध्यर्थं समागता, सैवाहं कमलप्रभा युष्माकं समीपे स्थितास्मि. अयं श्रीपालो मे पुत्रो वर्त्तते यस्तव सुताया नाथो जातोऽस्ति. इति श्रुत्वा रूपसुंदरी सानंदा जाता, तूर्णं च स्वभ्रातुः पुण्यपालस्याग्रे गत्वा मदनसुंदर्याः सर्वामपि वार्त्तां कथयामास. तत् श्रुत्वात्यंतं हर्षितः पुण्यपालोऽपि सत्वरं कुमारसमीपमागत्य तं महताग्रहेण कुटुंबसहितं स्वमंदिरे समानयत. कुमाराय च निवासार्थं धनधान्यमणिमाणिक्यमुक्ताफलादिसमन्वितमावासं दत्तवान्. तत्र च श्रीपालः कुटुंबसहितो नवपदाराधनतत्परः सुखेन वसतिस्म. अन्यदा श्रीपालावासस्य पार्श्वे रथ्यायाः प्रजापालराजाश्वारूढः क्रीडार्थं गच्छति. तदा तदावासमध्ये देवकुमारसमानरूपेण श्रीपालकुमारेण समं गवाक्षे स्थितां निजपुत्रीं मदनसुंदरीं दृष्ट्वा मदनवशं गतयानया मम कुपुत्र्या निश्चितं कुष्ठिनं भर्त्तारं त्यक्त्वा कोऽप्यन्यो नवीनपतिः कृतो दृश्यते, अतो धिग्मां, मयैव प्रथमत एवायुक्तं कृतं, ततः पश्चादनयाप्ययुक्तं कृतं, मम कुलेऽनया कुकन्यया महान् कलंको दत्तः, इति विस्मयापन्नस्य चिंतातुरस्य विषण्णस्य च नृपस्याग्रे तदैवावसरज्ञेन पुण्यपालेनागत्य मदनसुंदर्याः सर्वोऽपि वृत्तांतो निवेदितः, तं वृत्तांतं श्रुत्वा राजा पुण्यपाल-

सहितो मदनसुंदर्याद्यलंकृतावासे समागतः, राजानं चागतं दृष्ट्वा मदनसुंदर्या सहितेन श्रीपालेनाभ्युत्थाय नत्वा च तस्यातिसन्मानं दत्तं, तद् दृष्ट्वा भूमिपालोऽत्यंतं लज्जायुक्तो जातोऽवादीच्च, हे वत्से त्वं धन्यासि कृतपुण्यासि त्वमेव विवेकिन्यसि त्वमेव तत्वज्ञा त्वयेदं सर्वं सत्यं कृतं, इत्यादि स्वपुत्र्या मदनसुंदर्या राजा प्रशंसां कृतवान्. तदा सर्वैर्लोकैरपि तस्या अतीव प्रशंसा कृता. पुनः राजा प्राह हे कन्ये त्वया मम कुलमुध्धृतं, जननी च ते समुज्ज्वला जाता, त्वया जिनधर्मोऽपि प्रद्योतितः, हे मदनसुंदरि! मया तुभ्यं महद्दुःखं दत्तमस्ति तं सर्वं ममापराधं क्षमयस्व? एवं स्वपितुः पश्चात्तापोद्भवं वचनं श्रुत्वा मदनसुंदरी प्राह—हे तात! संप्रति यूयं स्वहृदये खेदं मा कुरुत, कर्मणां गतिरीदृश्येव भवति. एवं स्वकृतकर्मणामिदं सकलमपि फलं ज्ञात्वाहमपि शोचं न करोमि, पूर्वभवे जीवेन यादृशं कर्म कृतं भवति तादृशमेव फलं स भुंक्ते. अतोऽहं कर्त्ता अहं हर्त्ता इत्यादिगर्वो जीवेन कदाचिदपि न कर्त्तव्यः, कर्मणामेव प्राधान्यं हृदि चिंतनीयं, अतो हे तात! जिनोक्तमेव धर्मं त्वमपि मन्यस्व, मिथ्यामतिं च त्यज. इति श्रुत्वा राजापि नवतत्वेषु जिनधर्मे च स्वरुचिं धृतवान् निर्मलं सम्यक्त्वं च प्राप.

अथ राजा श्रीपालकुमारस्य विविधप्रकारां स्तुतिं कृत्वावादीत्. हे श्रीपाल! धन्योऽहं येन सिंहरथपुत्रो जामाता लब्धः. पश्चादत्याग्रहेण महीनाथः श्रीपालं मदनसुंदरीं च गजेंद्रे समारोप्य महोत्सवपूर्वकं निजसभायामानीतवान्. तत्र धवलमंगलादि कृत्यं च कृतवान्. ततस्तेन श्रीपालकुमारस्य निवासाय धनधान्यगजाश्वरथपदातिसमुदायैः परिपूर्णं महामंदिरं दत्तं. तत्र परिवारयुतः कुमारो वसतिस्म. तदा सर्वत्र नगरे सकले च देशे श्रीजिनशासनस्य महती प्रशंसा जाता. अथान्यस्मिन् दिने गजाश्वरथसुभटादिपरिवारैः परिवृतः श्रीपालकुमारो वनलीलां द्रष्टुं गतस्तदा पुरीजनैर्देवकुमार इव स श्रीपालो दृष्टः, इतः केनचिद् ग्राम्यपुरुषेण लोकानामग्रे पृष्टं कोऽयं राजा प्रयाति? ततो नागरिकैः प्रोक्तं भो अयं राजा नास्ति किंतु मदनसुंदर्याः पतिरयं प्रजापालनृपतेर्जामातास्ति. श्रीपालकुमारेण नागरैरुक्तं तद्वचनं श्रुतं, ततो विलक्षीभूय स तूर्णं निजगृहे समागतः, उदासीनतया च स्थितः; माता च तादृशं विलक्षीभूतं विषण्णं च निजतनूजं दृष्ट्वाऽप्राक्षीत् हे पुत्र! किमद्य तव शरीरे काचिद्व्याधिरस्ति? अथवा केनापि तवाज्ञा खंडितास्ति? अथवा तव भार्यया मदनसुंदर्या तव किमपि कथितमस्ति? केन कारणेनाद्य त्वमीदृशो विमनस्कश्चिंतातुरश्चासि?

अद्य ते मुखकमलं विछायं दृश्यते, ततः सत्यं कारणं त्वं वद? तत् श्रुत्वा श्रीपालकुमारः प्राह हे मातर्मम चिंतातुरत्वे त्वत्कथितकारणानां मध्ये किमपि कारणं नास्ति, तस्य कारणं किंचिदन्यदेव वर्त्तते. माता प्राह हे वत्स तर्हि तत्कारणं मांप्रति त्वं तूर्णं कथयस्व यथा मम मनसस्तापः शांतिं प्राप्नुयात्. तत् श्रुत्वा श्रीपालकुमारः प्राह हे मातरत्र मां स्वाभिधानेन कोऽपि न जानाति, मम पितुर्नाम्नापि मां कोऽप्यत्र न जानाति, तथैव जननीनाम्नापि मामत्र कोऽपि न जानाति, स्वगुणेनापि मां कोऽपि न जानाति, किं तु केवलं श्वशुरनाम्नैव मां सर्वेऽपि जना जानंति, अतो मे मनसि तद् वृत्तांतोद्भवं महद्दुःखं वर्त्तते. तेन कारणेन हे मातरथाहमत्र न स्थास्यामि. तत् श्रुत्वा कमलप्रभाऽवादीत् हे पुत्र! तव वचनानि सत्यानि, ततस्त्वमितः श्वशुरसेनां गृहीत्वा तव जनकस्य मालवदेशराज्यं गृहाण? तदा श्रीपालकुमारः प्राह हे मातरेवं श्वशुरबलेन राज्यगृहणे ममापकीर्त्तिरेव भविष्यति, यतस्तथाकरणेन लोके ममापवादो भवेत्. अतोऽहं विदेशंप्रति गत्वा स्वकीयभुजबलेनैव प्रभूतं धनं प्रगुणीकृत्य बलवत्सैन्यं च मेलयित्वाहं मम पितुर्मालवदेशराज्यं गृहिष्यामि, अतोऽहं हे मातर्युष्माकं पार्श्वे विदेशगमनाय प्रार्थनां कुर्वे, ततो मे तूर्णमेवाज्ञां देहि. तत्

श्रुत्वा माता प्राह हे पुत्र! विदेशगमनमतिदुष्करं वर्त्तते, तदा कुमारः प्राह हे मातरेतद्विदेशगमनं तु कातराणां नराणामेव दुष्करं न तु मादृशानां सत्त्ववतां पुरुषाणां तद्दुष्करं. तत् श्रुत्वा माता प्राह हे पुत्र! तर्हि मदनसुंदर्या सहिताहमपि विदेशे तव सार्धमागमिष्यामि. कुमारेणोक्तं परदेशगमने स्त्रीसार्थः सर्वदा वांछितकार्ये विघ्नकारक एव भवति. अतो युवाभ्यामत्रैव धर्मध्यानपरायणतया स्थेयं, मह्यं च विदेशगमनायाज्ञा देयेति. एवं स्वपुत्रस्याग्रहं ज्ञात्वा मात्रापि शुभाशिर्युक्ताज्ञा तस्मै विदेशगमनाय दत्ता. अथ मदनसुंदरी विदेशगमनोत्सुकं स्वभर्त्तारं प्रति योजितांजलिः प्राह, हे स्वामिन्नहं तु युष्माकं देहछायेव वियोगं न सहिष्ये, अतोऽहं युष्माभिः सहैव परदेशेऽप्यागमिष्यामि. तत् श्रुत्वा कुमारोऽवादीत् हे प्रिये! तावकीनं वचनं तु सत्यमेव परंतु विदेशे मयैकाकिनैव गमनं श्रेयस्करं, यतो विदेशे जायासंगमः पादबंधनत्वात् कार्यहानिकरो भवेत्, अतस्त्वया मम मातुः सेवार्थमत्रैव स्थेयं. तत श्रुत्वा मदनसुंदरी प्राह, हे स्वामिंस्तर्हि युष्माकं वचनं मे प्रमाणं, अथ विदेशे गच्छद्भिर्युष्माभिः श्रीसिद्धचक्रस्य ध्यानं मार्गे ध्येयं, पुनरत्र शीघ्रमागंतव्यं च. अथ श्रीपालकुमारः करे करवालं विधाय मातरं नत्वा मदनसुंदरीकृतमंगलतिलकयुतः

जोपरि बंधनीयं. कुमारेणापि तदौषधीद्वयं गृहीत्वा स्वपार्श्वे स्थापितं.
अथ श्रीपालकुमारस्तेन विद्याधरेण सह गिरिनितंबस्थले प्राप्तस्तत्र च तेनानेके धातुर्वादिनः
पुरुषा रससिद्धिं कुर्वंतो दृष्टाः, ते पुरुषास्तं विद्याधरं कथयामासुः, भवद्भिरस्मदुपरि कृपां विधाय यः
सुवर्णरससिद्धेराम्नायो दत्तस्तेन विधिनास्माभिर्भूरिप्रयत्नः कृतस्तथापि सुवर्णरससिद्धिर्न जायते. तत्
श्रुत्वा विद्याधरेणोक्तमस्य महाभाग्यशालिपुरुषोत्तमस्योत्तरसाधकत्वपूर्वकमधुनैव यूयं तां रससिद्धिं
साधयध्वं, एवं कृते निश्चयेन युष्माकं वांछा सफलीभविष्यति. मयाप्यस्यैव पुरुषोत्तमस्य सहायेन
सांप्रतं मम विद्यासिद्धिः प्राप्ता. तत् श्रुत्वा तैर्धातुर्वादिभिः सविनयं कुमारायोत्तरसाधकत्वकृते विज्ञ-
प्तिः कृता. कुमारेणापि सहर्षं तत्प्रतिपन्नं. ततस्तैस्तदैव रससिद्धिं साधयितुमारब्धं, तत्क्षणादेव सा
सिद्धिं प्रयाता, ततस्तैरत्यंतं हर्षितैः कुमाराय प्रोक्तं हे पुरुषोत्तम! तव प्रसादादस्माकं प्रयत्नः सफ-
लोऽभूत्, अतस्त्वमिदं सकलं सुवर्णं गृहाण? कुमारः प्राह भो धातुर्वादिनो ममानेन सुवर्णेन
किमपि प्रयोजनं नास्ति, यूयमेव तत्स्वीकुरुध्वं. एवं कुमारेण निषिद्धा अपि ते धातुर्वादिपुरुषा गु-
रुभक्तिकृते एकं सुवर्णखंडं कुमारवस्त्रांचले बबंधुः. ततोऽनुक्रमेण श्रीपालकुमारो नानाग्रामनगराणि

शुभमुहूर्त्ते हृदि श्रीसिद्धचक्रस्मरणं कुर्वन् विदेशंप्रति शुभप्रयाणमकरोत. ग्रामनगरपुरपत्तनेषु विविधप्रकाराणि कुतूहलानि पश्यन् सिंह इव निर्भयमनाः श्रीपालकुमारः परिभ्रमन्ननुक्रमेणैकगिरिवरपरिसरे प्राप्तः, नंदनवनसदृशे हंससारसादिनानाप्रकारक्रीडज्जंतुविराजितसरोवररम्ये तत्र प्रदेशे तेनैकः प्रफुल्लितकुसुमाकरश्चंपकवृक्षो दृष्टः, तस्य चंपकवृक्षस्याधोभागे मंत्रध्यानपरायणमेकमुदासीनतापन्नं विद्याधरपुरुषं सोऽपश्यत. तं दृष्ट्वा श्रीपालकुमारः प्राह भो पुरुष! त्वं कोऽसि? किमर्थं च त्वमत्रोदासीनभावयुतः स्थितोऽसि? तेनोक्तं हे सत्पुरुष! अहं विद्याधरोऽस्मि, मम पार्श्वे मे गुरुदत्ता विद्या वर्त्तते, परमुत्तरसाधकपुरुषेण विना सा कथमपि सिद्धिं न प्रयाति, तेनैव हेतुनाहमुदासीनभावमापन्नोऽस्मि. तत् श्रुत्वा कुमारेणोक्तं हे विद्याधर! त्वं विषादं मा कुरु? विद्यासाधनेऽहं तवोत्तरसाधको भवामि, ततः निर्भयः सन्नधुनैव त्वं तत्र विद्यां सुखेन साधय? तत् श्रुत्वा तेन विद्याधरेण हर्षसहितं सा विद्या साधितुमारब्धा तूर्णं च सिद्धिं प्रयाता. स्वविद्यासिद्धितोऽतितुष्टेन तेन विद्याधरेण कुमारायौषधीद्वयं प्रदत्तं, एका जलनिस्तारिणी द्वितीया च शस्त्रनिवारिणी. तद्दत्वा पुनर्विद्याधरेण कथितं हे सत्पुरुष! इदमौषधीद्वयं स्वर्णमये रूप्यमये वा ताम्रमये यंत्रे प्रक्षिप्य भु-

पश्यन् भृगुकच्छाख्यनगरे समागतः, तत्र तेन तत्सुवर्णं विक्रीयोत्तमवस्त्रशस्त्रादि गृहीतं, त्रिधातुमये यंत्रे चौषधीयुगलं च प्रक्षिप्य स्वभुजयोर्बद्धं, तत्र स सुखेन कालं गमयतिस्म.

॥ इति श्रीश्रीपालचरित्रे गद्यबंधे द्वितीयः प्रस्तावः समाप्तः ॥ श्रीरस्तु ॥

---

अथ कौशांबीनगरात्कुबेर इव धनेश्वरोऽनेकैः किंकरैः परिवृतः पंचशतपोतनायको धवलनामा श्रेष्ठी व्यापारार्थं तत्र समागतः, तेन प्रवहणानीतक्रयाणकानि तत्र विक्रीय कोटिमितं द्रव्यं चोपार्ज्य तत्रत्यान्यैः क्रयाणकैः स्वकीयपंचशतयानपात्राणि पुनर्भृतानि. अथ तस्य धवलश्रेष्ठिनो यानपात्राणां वर्णनं क्रियते. तेषां यानपात्राणां मध्ये पोमशकूपस्तंभैर्विराजमानोऽतिरम्य एको जंगीनामा पोतोऽस्ति ( १ ) लघुजंगीनामानश्चत्वारः पोताः ( ४ ) शफरीपोताः शतमेकं ( १०० ) बेडा इत्याख्या अष्टाधिकशतं पोताः संति ( १०८ ) द्रोणमुखाः पोताश्चतुरशीतिः ( ८४ ) वेगडाख्यपोताश्चतुःषष्टिः ( ६४ ) सिल्लाख्यपोताः चतुष्पंचाशत् ( ५४ ) आवर्त्तनामानः पोताः पंचाशत् ( ५० ) क्षुरप्रनामानः पोताः पंचत्रिंशत् ( ३५ ) अनया रीत्या पंचशतपोतास्तस्य ज्ञेयाः.

अथ तेन धवलश्रेष्ठिना तेषु पंचशतपोतेषु दशसहस्रसुभटास्तेषां रक्षानिमित्तं स्थापिताः, पुनस्तेन तेषु यानपात्रेषु मालाजातीयभिल्लजातीयकिरातादिम्लेछजातीयाश्च बहवः सुभटा रक्षिताः, हिंगुमरिचजीरकलवणभेषजधान्यजलकाष्टतृणादिभिस्तानि यानपात्राणि तेन संभृतानि. हस्त्यश्वादयोऽपि तेषु संरक्षिताः, नानाशस्त्रतोपनालखड्गकुंततोमरबाणादिभिश्च ते पोताः समंतादाछादिताः कृताः, जंगमानि नगराणि इव सागरे स्थितानि तानि यानपात्राणि शोभंते. बहुचामरछत्रध्वजपताकाशढदवरकलांगलशिक्यादिभिस्ते पोता व्याप्ता अक्रियंत. भेरीभुंगलझल्लरीप्रभृतिवाजित्रगीतनृत्यसंपन्नानि नानादेशोद्भवजनसांयात्रिकनिर्यामकादियुक्तानि तानि यानपात्राणि च समजायंत. तदा स धवलश्रेष्ठी नृपाज्ञां गृहीत्वा नृपाय चामूल्यं प्राभृतं समर्पयित्वा शुभमुहूर्त्ते नानावाजित्राणां मनोहरेषु शब्देषु जायमानेषु याचकेभ्यो भूरिदानं ददत्परिवारयुतो महद्यानपात्रे समुपाविशत्. ततः स किंकरादिसर्वजनेभ्यः शिक्षां दत्वा नाविकानवादीत् भो नाविका अस्माभी रत्नद्वीपंप्रति गंतव्यमस्ति, ततस्तद्दिशि प्रवहणानि प्रेरयध्वं. तदा ते नाविका अपि प्रवहणोपरिस्थितान् सढान् विस्तार्य लांगलानि चाकृष्य प्रवहणानि प्रेरयितुं नानाविधोपायानकुर्वंत, परंतु कथमपि ते पोता नो

चलंति. तद् दृष्ट्वा धवलोऽत्यंतचिंतातुरो जातः, स्वयं च तूर्णं प्रवहणात्समुत्तीर्य नगरे गत्वा सीकोतरीं पृष्टवान्. तदा सा सीकोतरी देवी प्राह हे श्रेष्ठिन्! तव प्रवहणानि क्षुद्रदेवतया स्तम्भितानि संति, ततो यदि त्वं द्वात्रिंशल्लक्षणं कंचित्पुरुषं बलिदाने यच्छसि तदैव तव प्रवहणानि चलिष्यंति, अन्यथा नैव चलिष्यंति. इति देव्या वचनानि श्रुत्वाऽमूल्यं प्राभृतं हस्ते गृहीत्वा स तस्य नगरस्य राज्ञः समीपे गतः, तत्र स राज्ञः समीपे मणिमुक्ताफलादिप्राभृतं मुक्त्वा विज्ञप्तिं कृतवान्. हे राजन्! मम प्रवहणानि क्षुद्रदेवतया स्तम्भितानि संति, अतस्तस्या बलिदानायैको द्वात्रिंशल्लक्षणः पुरुषो ममोपरि कृपां कृत्वा भवद्भिर्देयः. येन झटिति मे कार्यसिद्धिः स्यात्. तत् श्रुत्वा संतुष्टेन राज्ञा प्रोक्तं हे श्रेष्ठिन् अस्मिन् नगरमध्ये यः कोऽपि वैदेशिको नरो भवेत् तस्य बलिदानं त्वया देव्यै देयं, परं त्वेतन्नगरनिवासिनः कस्यापि पुरुषस्य त्वया बलिदानं न देयं. तत् श्रुत्वा श्रेष्ठी हर्षितः सन् स्वावासे समायातः. अथ स धवलश्रेष्ठी नगरमध्ये तद्द्वात्रिंशल्लक्षणोपेतविदेशिनरगवेषणकृते स्वसुभटानादिशत्. तेऽपि तदर्थं सर्वत्र नगरेऽभ्रमन्. इतस्तैः सुभटैः पूर्वोक्तलक्षणोपेतः श्रीश्रीपालकुमारो नगरचत्वरे लीलया भ्रमन् दृष्टः, तं दृष्ट्वा ते हर्षयुक्ताः शीघ्रं श्रेष्ठिनः समीपे समा-

विदेशिपुमानस्माभिर्दृष्टोऽस्ति.
गत्य प्रोचुः, हे स्वामिन् नगरचत्वरे पूर्वोक्तद्वात्रिंशल्लक्षणोपेत एको
तत् श्रुत्वा श्रेष्ठी प्राह भो सुभटा यूयं तूर्णं तत्र गछत, आनयत च तं पुरुषं. एवंविधां श्रेष्ठिन आ-
ज्ञां श्रुत्वा ते सुभटाश्चपलं तत्र गताः, श्रीपालकुमारं च प्रोचुः, भो वैदेशिक! त्वं शीघ्रमस्माभिः
सहागछ? तत् श्रुत्वा कुमारेणोक्तं युष्मत्सार्धमहं कुत्रागछामि? ते प्रोचुरस्मत्स्वामिधवलश्रेष्ठिसमी-
पे त्वं तूर्णमागछ? कुमारेणोक्तं भो सुभटास्तत्र मम किं प्रयोजनमस्ति? तैरुक्तं भो पुरुष तस्य
श्रेष्ठिनः प्रवहणानि क्षुद्रदेवतया स्तंभितानि संति, तस्यै तव बलिदानं श्रेष्ठी दास्यति.
तत् श्रुत्वा कुमारः प्राह अरे मूर्खा बलिदानं तु युष्मत्स्वामिधवलस्यैव दातुं योग्यं, मे वीर-
स्य बलिदानं दातुं कः समर्थोऽस्ति? एवं तेषां परस्परं तत्र कलहो जातः, पश्चात्तैः सुभटैः समंता-
त् स कुमारः परिवेष्टितः, तद् दृष्ट्वा कुमारेण सिंहनादः कृतः, कुमारस्य भयंकरं सिंहनादं श्रुत्वा
कंपमानास्ते सुभटास्तत्स्थानात्तूर्णं नष्टाः, तदा धवलश्रेष्ठी राज्ञ आदेशं मार्गयित्वा कुमारबंधनार्थं
नृपसैन्यं मुमोच. तन्नृपसैन्यमपि कुमारकृतसिंहनादेन नष्टं. पश्चान्नृपसैन्यं धवलश्रेष्ठिसैन्यं चोभय-
मपि सायुधं सत् श्रीपालकुमारेण सह संग्रामं कर्त्तुं प्रवृत्तं. सर्वे सुभटा बाणखड्गकुंततोमरादिभिः

श्रीपा-
ल च०
४१

श्रीपालशरीरं छादयामासुः, तथापि श्रीसिद्धचक्रप्रभावाच्छस्त्रनिवारिणीजटिकाप्रभावाच्च कुमारस्य शरीरे किमपि शस्त्रं पराभवं कर्त्तुं नो शक्नोति. ततः कुमारेण केषांचिद्भटानां नासिकाः, केषांचित् कर्णानि, केषांचित केशाः, केषांचिच्च शिखाः, केषांचिच्च श्मश्रूणि छिन्नानि, एवं पराभवं प्राप्तास्ते सर्वेऽपि सुभटास्तूर्णं दिशोदिशं पलायिताः, केषांचिन्मुखेभ्यो रुधिरप्रवाहाश्चलिताः, केचित्कातरास्तु कुमारकृतहुंकारशब्देनैव कंपमानाः पलायिताः, तद् दृष्ट्वा पौराणां मनसि महदाश्चर्यं प्रादुर्भूतं. अथैतस्मिन्नवसरे धवलश्रेष्टिना चिंतितं, किमयं विद्याधरः किन्नरो वा देवो वा दानवो वास्ति? तत्सम्यग्न ज्ञायते. किंचाहं तु व्यापारी, ततः केवलं निजकार्यसाधनेनैव मे प्रयोजनं, एतेन सह विग्रहकरणेन मम न किमपि फलं भविष्यति. अतो ममेदं कार्यमस्य कुमारस्यैवाग्रे कथनीयं वरं, इति स्वमनसि विचार्य धवलश्रेष्टी श्रीपालचरणयोः पपात. ततः स कुमारंप्रति प्रोवाच हे वीर! महतां कोपः केवलं प्रणामावधिरेव भवति, अतो ममापराधं मनसो दूरीकृत्य ममोपरि च कृपां विधाय देवीस्तंभितान् मम पोतान् समुद्रमध्ये रत्नद्वीपमार्गे चालय? इदं मे कार्यं कर्त्तुं त्वमेव समर्थोऽसि. अथेति श्रेष्टिनो दीनवचांसि श्रुत्वा श्रीपालकुमारः प्राह, हे श्रेष्टिन्नेतत्तव कार्यकृते त्वं मे

किं दास्यसि? तत् श्रुत्वा धवलश्रेष्ठिनोक्तं यदि त्वं ममैतत्कार्यं साधयिष्यसि तर्हि तुभ्यमहमेकल-क्षं दीनारं दास्ये. कुमारेणोक्तं वरं, ततः श्रीपालेन सह धवलो जंगीनाम्नि महत्प्रवहणे समारू-ढः, सर्वे नाविकाः सांयात्रिकाश्च सावधाना बभूवुः.

अथ श्रीपालेन नवपदध्यानं मनसि धृत्वा सिंहनादो मुक्तस्तत्सिंहनादेन भीतेव सा क्षुद्रदेव-ता तत्कालं नष्टा, सर्वाणि प्रवहणानि च वेगेन प्रचलितानि, विविधप्रकाराणि वाजित्राणि वाद्यंते, नर्त्तका नृत्यं कुर्वंति, भट्टा जयजयशब्दानि कुर्वंति, प्रवहणानि चलितानि दृष्ट्वा हर्षितः श्रेष्ठी श्री-पालकुमाराय लक्षदीनाराणि दत्वा स्वमनस्यचिंतयत्. यद्ययं महापुरुषो मम सार्थे समागच्छेत्तदैवं-विधे कस्मिंश्चित्प्रयोजने सहायदाता स भवेत्. इति मनसि विचिंत्य तेन कुमारायोक्तं, हे कुमार! त्वमपि मत्तो मूल्यं गृहीत्वा मम सार्थे प्रचल? कुमारेणोक्तं हे श्रेष्ठिन्! मह्यं त्वं किं मूल्यं दास्य-सि? धवलः प्राह हे कुमार! संप्रति मम दशसहस्रसुभटा वर्त्तंते, तेषां सर्वेषामहमेकस्मिन् वर्षे को-टिदिनारमूल्यं ददामि; एवं प्रत्येकसुभटस्याजीविका वर्षैके सहस्रदीनारमिता जाता, तुभ्यमहमेतस्य द्विगुणमिति वर्षैके दीनारसहस्रद्वयं दास्ये. तत् श्रुत्वा कुमारेणोक्तं हे श्रेष्ठिन्! तव सर्वेषां सुभटा-

नामाजीविकयैककोटिमिता भवति, सा सर्वाप्याजीविका त्वया मह्यं यदि दीयते तदाहमपि त्वया सहागच्छामि, तव प्रवहणानां च रक्षां करोमि. अन्यथा न. तदा धवलेन चिंतितमयं त्वयुक्तं मूल्यं मार्गयति, एवं विचिंत्य तेन कुमारायोक्तं हे कुमार! अहं वणिग्जातीयस्ततो मयैकस्यैव जनस्यैतावन्मूल्यं कथं दीयते! तत श्रुत्वा कुमारेणोक्तं हे श्रेष्ठिन् अहमपि तव किंकरीभूय त्वया सहागमनेच्छुर्न, किंतु मे मनस्यपि देशाटनं कर्त्तुमभिलाषो वर्त्तते, ततस्त्वं मत्तो भाटकं गृहीत्वा तव प्रवहणे स्थानं देहि? तत् श्रुत्वा हर्षितः श्रेष्ठ्युवाच भो कुमार प्रतिमासे त्वया दीनारशतं मे देयं, कुमारेणापि तत्प्रतिपन्नं. ततः कुमार एकमासस्य भाटकमग्रत एव श्रेष्ठिने दत्वा महत्प्रवहणमध्ये सम्यक्स्थाने सुखेन स्थितः.

अथ नाविकैस्तानि पंचशतप्रवहणानि प्रेरितानि, तानि प्रवहणान्यप्यनुकूलवायुना महावेगेन चलितानि, श्रीपालेन सह धवलश्रेष्ठ्यप्युच्चैः स्थाने स्थितः सन् रत्नाकरे विविधप्रकाराणि कुतूहलानि पश्यति. कुमारोऽपि महासागरे विविधप्रकारां गतिं कुर्वतो महामकरलघुमत्स्यकच्छपतिमिंगिलजातिशुसमारादिजलजीवान् पश्यति. तत्र महाकूपस्तंभे काष्टपंजरस्थितो नरः समुद्रस्थसर्वमार्गव्यवस्थां

विलोकयति. तत्र स्थाने स्थाने वाडवाग्निः प्रज्ज्वलति. सूर्योदयास्तसमये पोतस्थितसर्वेषां जनानां दिग्भ्रमश्च भवति. कुत्र कुत्रचित्सूर्यचंद्रकिरणैर्महासागरजलेषु विविधप्रकाराश्चर्याणि भवंति, एवं विविधप्रकाराणि कुतूहलानि पश्यन् कुमारो गवाक्षमध्ये स्थितोऽस्ति. इतः पंजरस्थेन नरेण नाविका विज्ञप्ताः, भो नाविका जलकाष्ठादिग्रहणार्थं भवतां चेत्कार्यं भवेत् तदेदं बब्बरकुलं समागतमस्ति. तत् श्रुत्वा धवलश्रेष्ठ्यप्यवादीत् भो अत्रैव स्थेयं, एवंविधं श्रेष्ठ्यादेशं श्रुत्वा नाविकैः सर्वाण्यपि प्रवहणानि तत्रैव बब्बरकुले स्थापितानि. तदा धवलश्रेष्ठ्यपि निजदशसहस्रसुभटैः सह प्रवहणादुत्तीर्य समुद्रोपकंठे समाजगाम. अन्येऽपि सांयात्रिका जलकाष्ठाद्यर्थं तीरे समुत्तीर्णाः, स्थाने स्थाने लोकाः संचरितास्तेषां कोलाहलं श्रुत्वा प्रवहणानां करग्रहणार्थं बब्बराधीशपुरुषास्तत्र समागताः, तैः श्रेष्ठिनः पार्श्वे समागत्य प्रवहणानां करो याचितः, परंतु धवलश्रेष्ठिना निजदशसहस्रसुभटबलेन निजमनसि गर्वं धृत्वा तेभ्यो राजकरो नार्पितः, ततस्तेषां परस्परं कलहो जातः, धवलश्रेष्ठिसुभटैस्ताडितास्ते राजपुरुषा निजनगरे गत्वा स्वराज्ञे व्यजिज्ञपन्, हे नाथ! धवलश्रेष्ठिसुभटैर्वयं ताडिताः, तत् श्रुत्वा महाकालो भूपालः कोपारुणलोचनो निजसैन्यं प्रगुणीकृत्य द्रुतं तत्र स-

मागतः, धवलश्रेष्टिसुभटैः सार्द्धं संग्रामं च चकार. संग्रामे धवलश्रेष्टिसुनटाः पराजयं प्राप्य पलायिताः, तदा महाकालनृपसैनिका धवलं गृहीत्वा निजनृपाज्ञया तं वृक्षे बबंधुः, ततो महाकालनृपोऽपि तस्य सर्वेषु पोतेषु निजारक्षकान स्थापयित्वा निजनगरींप्रति चचाल. धवलसुभटास्तु दिशोदिशं पलायिताः, एतादृशं स्वरूपं दृष्ट्वा प्रवहणगवाक्षस्थितः श्रीपालकुमारो धवलंप्रति प्राह नो धवल संप्रति ते दशसहस्रसुनटाः क्व गताः? ये कोटिदीनारेण त्वया रक्षिताः, तत् श्रुत्वा बंधनैरधोमुखो वृक्षबद्धो धवलः कुमारं प्रत्युवाच हे कुमार! अधुना त्वं मम क्षतोपरि क्षारं कथं क्षिपसि? श्रीपालः समवोचत् हे धवल! अद्यापि ते किमपि गतं नास्ति, महाकालनृपं जित्वा तेन गृहीतं तव सकलमपि वस्तुजातं चेत् तुभ्यं पश्चादहं दापयेयं तर्हि त्वं मह्यं किं दास्यसि? तत् श्रुत्वा श्रेष्टी प्राह, मम सर्वधनस्यार्द्धं तुभ्यमहं दास्ये, श्रीपालः प्राह अत्र किं प्रमाणं? धवलेनोक्तं तद्विषये परमेश्वरः साक्षी. तत् श्रुत्वा श्रीपालो बद्धकवचः शरासनं गृहीत्वा पोतात्समुत्तीर्य महाकालनृपस्य पृष्टेऽधावत. तस्य निकटं गत्वा नृपंप्रति कुमारः प्राह भो बब्बराधीश! नो कातर! अपराधं कृत्वा त्वं क्व गच्छसि? सैन्ययुतः शीघ्रं मम समीप आगच्छ? मया सार्द्धं च संग्रामं कुरु? चेद्यदि त्वं क्ष-

त्रियोऽसि तदा तूर्णमेव त्वया समरांगणभूमौ समागंतव्यं. एवंविधानि कुमारवचनानि श्रुत्वा बब्बराधीशो हास्यं कृत्वा कुमारंप्रत्यवोचत्, भो पुरुष! त्वमद्यापि बालोऽसि एकोऽसि सुंदराकृतिरप्यसि, कुतो मृत्युवांछां करोषि? अतो गच्छ त्वं निजस्थाने, एकेन सह संग्रामकरणं लोके प्रतिष्टितं नास्ति, क्षणादेव मम सेनायां त्वं चूर्णीभविष्यसि. एवंविधानि महाकालमहीपतिवचनानि श्रुत्वा श्रीपालकुमारेणोक्तं भो महाकाल! संग्राममभूमौ वाग्डंबरेण किं? यदि चेच्छूरोऽसि तदाऽविलंबमेव समागच्छ? वृथा जल्पनं च त्यज? इति कुमारस्य शौर्यमंडितानि वचांसि श्रुत्वा हृदि चमत्कृतो महाकालनृपः क्रोधातुरः सन् निजसैन्यं कुमारवधायादिष्टवान्. स्वकीयनायकादेशं प्राप्य तस्य सकलापि सेना चपलं पश्चान्निवृत्त्य धाराधरो जलधारैर्गिरिशिखरमिव शरैः कुमारशरीरमाच्छादयामास. खड्गधाराः कुंतप्रहाराश्च तच्छरीरोपरि पेतुस्तथापि श्रीनवपदप्रभावादौषधीयोगाच्च कुमारस्य शरीरे मनागपि पीडा न संजाता.

अथ श्रीपालकुमारेण महाकालसैनिकान् प्रत्युक्तं भो सैनिका भवद्भिर्यत्पराक्रमं कृतं, तन्मया सुष्टुरीत्या दृष्टं, अधुना यूयमपि मम हस्तौ पश्यत, इत्युक्त्वा शरवृंदैः स महाकालसेनां ताडया-

मास. तत्प्रहाराघातैः केचिद् भूमौ पतंति, केचिज्जीवितानि परित्यज्य परलोकं गच्छंति, केचिच्छ्यामवदनाः संतः कुमारस्यैव शरणं प्राप्ताः, एवं विशीर्णा महाकालसेना दिशोदिशं पलायिता, एवं कुमारकृतं स्वसैन्यभंगं दृष्ट्वा कोपारुणलोचनो महाकालनृपः स्वयमेव हस्तिस्कंधारूढो द्रुतं कुमारंप्रत्यधावत्, तदा कुमारेणोच्छल्य गजस्कंधात्तं भूमावास्फाल्य दृढबंधनैर्बद्धः, एवं निजमहीपालं बंधनबद्धं दृष्ट्वा प्रवहणस्थितास्तस्यारक्षका अपि द्रुतं पलायिताः, ततः श्रीपालेन धवलस्य बंधनानि दूरीकृतानि. तदा मुक्तबंधनो धवलः करे करवालं गृहीत्वा महाकालमहीपालवधार्थमधावत्. तदा कुमारेण तं निवार्य प्रोक्तं भो श्रेष्ठिन् गृहागतानां शरणागतपुरुषाणां व्यापादनं युक्तं न, यदुक्तं—गेहागयं च सरणा—गयं बद्धं च रोगपरिभूयं ॥ नस्संतबुड्ढबालयं च । न हणंति सयणपुरिसा ॥ ॥ १ ॥ तत् श्रुत्वा, धवलोऽपि निजकरात्खड्गं विमुच्य समुपाविशत्. इतः श्रीपालजये जाते ते पलायिताः श्रेष्ठिसुभटा अपि शीघ्रं धवलपार्श्वे समागताः, तान् दृष्ट्वा क्रोधाध्मातेन धवलेन तेषामाजीविकाभंगं कृत्वा निष्कासिताः, तदा दीनवदनांस्तानाश्वास्य श्रीपालकुमारेण निजसार्द्धद्विशतप्रवहणरक्षार्थं निजपोतेषु ते रक्षिताः, तेऽपि हर्षेण श्रीपालकिंकरा जाताः, ततः श्रीपालकुमारो म-

हाकालं नृपं मुक्तबंधनं कृत्वा पोतानां च करं तस्मै दत्वा वस्त्राभूषणादि च प्राभृतीकृत्य विससर्ज. तदा महाकालनृपः श्रीपालं प्रति विज्ञप्तिं कृतवान्, हे महाभाग! त्वं मम नगरे समागत्य मे राजसभां पवित्रां कुरु? तदा धवलेन कुमारंप्रति प्रोक्तं भो कुमार! रिपुस्थाने सर्वथा न गंतव्यं. कुमारेणोक्तं हे श्रेष्ठिन् सांप्रतमयं महाकालनृपोऽस्माकं शत्रुर्नास्ति, किंतु मित्रमेवास्ति, अतस्तत्र गमने नः कोऽप्यपायो नास्ति. एवं कथयित्वा श्रीपालकुमारः स्वपरिवारयुतो महाकालनृपेण सह तस्य नगरंप्रति चचाल. नृपेणापि महोत्सवपूर्वकं महताडंबरेण कुमारस्य नगरप्रवेशो विहितः, राजसभां समागत्य श्रीपालं च स सिंहासने संस्थापयामास. ततो विविधप्रकारां कुमारस्य सत्कारादिप्रतिपत्तिं कृत्वा बब्बराधीशस्तंप्रति विज्ञपयामास, भो कुमारेंद्र! ममैका मदनसेनाभिधाना पुत्री वर्त्तते, तस्यास्त्वं पाणिग्रहणं कुरुष्व? तत् श्रुत्वा कुमारेणोक्तं हे राजन्। अज्ञातकुलादिकस्य मे त्वं स्वपुत्रीं कथं यछसि? तदा बब्बराधिपतिरवादीत्, हे कुमार! तव पराक्रमेणैव तवोत्तमकुलादि मया ज्ञातमेवास्ति. एवं तस्य महीपतेर्महांतमाग्रहं दृष्ट्वा श्रीपालेनापि तत्प्रतिपन्नं. ततो महाकालराज्ञा नानाप्रकारां विवाहसामग्रीं प्रगुणीकृत्य स्वपुत्र्या मदनसेनया सह श्रीपालकुमारस्य पाणिग्रह-

णं कारितं. ततो राज्ञा करमोचनावसरे प्रचूतधनादिसंयुतं नवनाटकोपेतं पोतरत्नं श्रीपालकुमाराय प्रदत्तं. अथ महाकालनृपकृतमहोत्सवो मदनसेनया सह श्रीपालकुमारो महासागरतटे समाजगाम. अथ महाकालराज्ञा श्रीपालकुमाराय प्रदत्तं चतुःषष्टिकूपस्तंभैर्विराजन्महाजुंगनामप्रवहणरत्नं दृष्ट्वा धवलश्रेष्टी निजमनसि जज्वाल, अचिंतयच्च मत्तोऽप्यस्य ऋद्धिरधिका जातेति. अकिंचनोऽप्ययं मया सार्द्धं समागत्यैतावद्धनं प्राप्तवान्, ममाप्यर्द्धं द्रव्यं पोतसहितं तेन मुधैव गृहीतं, इत्यादिकुविकल्पैस्तस्य हृदये महती चिंता समुत्पन्ना.

अथ महाकालनृपोऽपि निजकन्यामदनसेनायै नानाप्रकारां गृहिण्युचितां शिक्षां दत्वा श्रीपालकुमारं च प्रेमपूर्वकं संमील्य स्वनगरे जगाम. नाविकैः प्रेरितानि प्रवहणान्यपि रत्नाकरे चेलुरनुक्रमेण च रत्नद्वीपंप्रति समाजग्मुः, सर्वपोतानां क्रयाणकानि समुत्तार्य तटोपरि पटकुटीं विस्तार्य पोतस्थसांयात्रिकादिजनाः सुखेन तत्र संतस्थुः. तदा श्रीपालोऽपि परिवारयुतो रम्यं पटमंदिरं तटोपरि विधाय मदनसेनया सह नृत्यं पश्यंस्तत्रैव स्थितः. इतो धवलश्रेष्ठ्यपि कुमारसमीपे समागत्य प्रोवाच हे कुमार! तव पोतस्थक्रयाणकानि त्वया कथं न विक्रीयंते, सांप्रतमत्र तेषां बहुमूल्यं मिल-

...दि च प्राभृतीकृत्य विससर्ज.



ति. तत् श्रुत्वा कुमारस्तंप्रति प्राह, भो श्रेष्ठिन् मम क्रयाणकान्यपि भवद्भिरेव विक्रेयाणि, तथैव नवीनग्रहणावसरेऽपि त्वयैवात्रत्यक्रयाणकानि ग्राह्याणि, तत् श्रुत्वा दुग्धं लब्ध्वा बिडाल इव धवलोऽत्यंतं हर्षितो बभूव, चिंतितं च तेनैतेषां क्रयाणकानां क्रयविक्रयेऽहमपि प्रछन्नं भूरिद्रव्यलाभमधिगमिष्यामि, यतः सुखलीनोऽसौ कुमारो नैव तन्मूल्यादिशुद्धिं विधास्यति.

अथ देवकुमारसदृशस्तुरंगारूढः कोऽपि नरः श्रीपालालंकृतपटकुटीमंदिरे समाजगाम, प्रतिहारेण कुमाराय तत्स्वरूपं निवेदितं, तदा कुमारेणोक्तं हे प्रतिहार तूर्णमेव तं नरं त्वमत्र प्रवेशय? तदा प्रतिहारेणापि शीघ्रमेव स नरः कुमाराग्रे समानीतः, अथ स नरोऽपि कुमारं नत्वा समीपे स्थितः, कुमारस्वरूपादि विलोक्य स नरः स्वहृदये चिंतयामास, निश्चितमयं कोऽपि प्रभाविकनरोऽस्ति. अस्य पार्श्वे संगीतनृत्यादिसर्वराजरीतिर्वर्त्तते, ततो ध्रुवमयं राजकुमारो दृश्यते. नृत्ये संपूर्णे जाते सति श्रीपालस्तं पप्रछ. भो पुरुषोत्तम त्वं कोऽसि? कुतः स्थानाच्च समागतोऽसि? किं तव नामास्ति? किमप्याश्चर्यं चेत्त्वया दृष्टं भवेत्तदपि निवेदय? तत् श्रुत्वा तेनोक्तं हे महाभाग! अस्मिन् वलयाकारे रत्नद्वीपे विविधशिखरैः शोभमाने रत्नसानुनामशैले रत्नसंचयाख्या नगरी विद्यते,

तत्र कनककेतुनामा विद्याधरेशो महीपालो राज्यं करोति, तस्य कनकमालाभिधाना शीलालंकारशोभिता राज्ञी वर्त्तते, तत्कुक्षिसंभवाश्चत्वारः पुत्राः संति, कनकप्रभः १ कनकशेखरः २ कनकध्वजः ३ कनकरुचिश्च ४ इति तेषामनुक्रमेण नामानि संति. तेषामुपरि मदनमंजूषाभिधानैका पुत्री बभूव, सा तत्वज्ञा रम्या सुशीला च सकलकलाकलापकलितास्ति. अथ तस्यां नगर्यामेको जिनदेवनामा जैनधर्मपरायणः श्रावको वसति, तस्य पुत्रोऽहं जिनदासनामा श्रावकोऽस्मि. अथाहं युष्मदग्रे एकमपूर्वमाश्चर्यं कथयामि, तत् सावधानतया यूयं शृणुत—अस्मिन् रत्नद्वीपे रत्नसानुनामपर्वतस्य शिखरे नानाप्रकारमणिमंडितमौलिशिखरैर्विराजितं रविमंडलमिव ध्वस्ततमःस्तोमविस्तीर्णततिनिकरं कनककेतुनृपपितामहेन कारितमत्युन्नतं रत्नमयं श्रीऋषभदेवप्रभुमंदिरमस्ति, तन्मध्ये च कनकमयी श्रीयुगादीशप्रभोर्मूर्त्तिरस्ति. तस्या अस्य रत्नद्वीपस्याधिपतिर्विद्याधरनृपेंद्रः सर्वदा सेवां करोति. तस्य पुत्री मदनमंजूषापि सर्वदा सविशेषं हर्षप्रकर्षसंपूरितमानसा सादरं यथास्यात्तथा जिनबिंबस्यांगरचनां विधिपूर्वकं भक्त्या चाष्टप्रकारपूजां करोति. अथान्येद्युः सा नृपपुत्री तस्मिन् जिनमंदिरे महाविस्तरेण जिनबिंबस्य पूजामकरोत्, ततस्तस्या जिनमूर्त्तेरतीवमनोहरा शोभा

संजाता. एवंविधां स्वपुत्रीरचितामतीवमनोज्ञां जिनबिंबपूजां विलोक्य विद्याधरमहीपालो निजमानसे जहर्ष, व्यचिंतयच्च अहो मे सकलकलाकलापकलितया पुत्र्या निश्चितमपूर्वा जिनबिंबपूजा कृतास्ति; अत इयं ध्रुवं धन्या कृतपुण्या स्थिरचित्ता सुशीला दक्षा जिनभक्तिरक्ता चास्ति, तेनास्या वरस्तत्सदृशो यदि मम मिलिष्यति तदैव मे मनसि समाधानं भविष्यति. इति विचारयन् क्षणं यावन्नृपः शून्यभावं प्राप्तः, पुनर्मनसि शुद्धभावं विधाय प्रभोर्दर्शनं कृत्वा स रंगमंडपाद् बाह्यमंडपे समागतः, तदैव नृपपुत्री मदनमंजूषापि एकाग्रमानसा प्रभुमूर्त्तिं पश्यंती मूलमंदिरपश्चिमद्वारान्निर्गत्य रंगमंडपे समायाता, तत्क्षणादेव जिनगृहकपाटद्वयं महच्छब्दं कुर्वत्समकालमेव संमिलितं, तदाश्चर्यं दृष्ट्वा तत्र सर्वे लोकाः संमिलिताः, राज्ञापि तत्कपाटोद्घाटनाय बहव उपायाः कृताः, परं कथंचिदपि तत्कपाटद्वयं नोद्घटितं, तदा नृपपुत्री मदनमंजूषा स्वहृदये पश्चात्तापं कर्त्तुं लग्ना, यन्मयाद्य श्रीजिनेश्वरप्रभोर्महत्यासातना कृता, येनेदं कपाटद्वयपिधानरूपमकार्यं जातं, एवं स्वहृदये पश्चात्तापं विधाय सा महता शब्देन रुदनं चकार. तदा राजा तां रुदनं कुर्वंतीं मदनमंजूषां प्राह हे पुत्रि! त्वं रुदनं मा कुरु? त्वयेयमासातना कृता नास्ति, अद्य मयैवासातना कृतास्ति, यतोऽद्य

त्वत्कृतातिरमणीयजिनबिंबांगरचनां विलोक्य शून्यभावेन मया तव वरचिंता कृतास्ति, तेन कुपिताधिष्टायिकदेव्यैवेदं सर्वं कृतमस्ति, ततश्चाद्य सर्वेषां प्रभुदर्शनांतरायः समजनि. अथ स विद्याधरमहीपतिर्निजपुत्र्या मदनमंजूषया सहितस्तत्रैव स्थितः कुंकुमकर्पूरागुरुकस्तूरिकाचंदनादिपूजासामग्रीं प्रगुणीकृत्य शासनदेव्यै बलिदानं च विधाय धूपदानेन सर्वं तत्स्थानं धूपयित्वा शुद्धभावेन परिवारेण सहोपवासत्रयं कृतवान्. तत्र च सामंतश्रेष्टिसेनापतिप्रजामात्यादिलोकाः संमिलिताः, केचिद्राजानं निंदंति, केचिन्नृपकन्यां निंदंति, केचिच्च स्वभाग्यानि निंदंतिस्म. तृतीयदिने रात्रेः पश्चिमयामे गगने तथाप्रकारा देववाणी संजाता—नास्ति दोषोऽत्र कन्याया। नरेंद्रस्यापि नास्ति च॥ कपाटौ मुद्रितौ येन। कारणं तन्निशम्यतां॥ १॥ इति गगनोद्भवां देवतावाणीं श्रुत्वा मदनमंजूषा हर्षिता रोमांचिता च संजाता. राजापि प्रमोदभरमेदुरांगो जातः, लोका अपि तद्देववाणीं श्रुत्वा सप्रमोदाः संजाताः, अथ सर्वे लोका एवं चिंतयंतिस्म, इयं देवीप्रभवा गगनवाणी किमग्रे कथयिष्यति? इति चिंतयत्सु लोकेषु पुनर्गगनवाणी जाता—दृष्टेऽपि यस्मिन् जिनमंदिरस्य। कपाटद्वंद्वं च समुद्धटेत॥ स एव भर्त्ता नृपकन्यकाया। जानीत लोकाः किल देववाण्या॥ १॥

इति गगनोद्भवं काव्यं श्रुत्वातिशयेन संतुष्टाः सर्वे लोकाः पुनाश्चिंतयामासुः, कस्येयं वाणी? एवं च कदा भविष्यति? इतश्च पुनर्वाणी प्रकटीभूता—श्रीऋषभस्य चेटी हि। नाम्ना चक्रेश्वरी सुरी ॥ मासस्याभ्यंतरे चास्या। आनयिष्याम्यहं वरं ॥ १ ॥ इत्थं प्रभाते जाते सति भेरीमृंगलादिविविधवाजित्राणां मनोहरेषु शब्देषु वाद्यमानेषु परिवारसंयुतो नृपस्ततः समुत्थाय स्वावासे संप्राप्तः, तत्र गृहमतजिनप्रतिमायाः पूजनं विधाय सर्वैः पारणं कृतं, इयं देवीवाणीसंबंधिनी वार्त्ता सकलेऽपि नगरे विस्तृता, ततो नित्यं लोकाः सप्रमोदास्तज्जिनमंदिरे कौतुकं विलोकयितुं समागच्छंति, परं कपाटद्वयं तु नो कश्चिदपि समुद्घाटयितुं शक्नोति. सर्वेऽपि जनाश्चिंतयंति यः कोऽपि भाग्यशाली कपाटयुगलमिदमुद्घाटयिष्यति तस्य भाग्यमप्युद्घटितमेव ज्ञेयं. सांप्रतं च किंचिदून एव मासो वर्त्तते, तथापि तत्कपाटयुग्मं तु तथैव दत्तमेवास्ति, ततः सर्वेषां मनस्सु महदाश्चर्यं जातमस्ति. एवमुक्त्वा पुनः स जिनदासः प्राह हे पुरुषोत्तम! त्वं द्वीपांतरात्समागतोऽसि, ततो यदि चेदिदं कार्यं तव हस्तेन भवेत्तदा तु निश्चितं चक्रेश्वरीदेवीप्रोक्तवाणी सत्या संजायेत.

इति जिनदासोक्तवचनानि श्रुत्वा श्रीपालोऽश्वरत्नं समारुह्य धवलश्रेष्ठिपार्श्वे समागत्य प्रोवा-

च, हे श्रेष्ठिन् प्रभुदर्शनार्थं जिनमंदिरे समागम्यतां, तदा धवलः प्राह भो कुमार! मम तु मे व्यापारकरणे एव प्रीतिरस्ति. भोजनायापि मया सम्यगवसरो न लभ्यते, ततो यूयमेव तत्र जिनमंदिरे गच्छत. तत् श्रुत्वा स्वपरिवारयुतः श्रीपालकुमारो जिनदासेन सह रत्नसंचयानगरीं प्रति चचाल. अथ सर्वेऽपि चलंतो जिनमंदिरसमीपे समागताः, ततः श्रीपालकुमारो लोकान् प्रत्यवादीत भो लोकाः स्वस्वभाग्यपरीक्षार्थं निजनिजहस्तेन जिनमंदिरकपाटयोः स्पर्शं कुरुत, तदा तैरुक्तं सूर्यं विना कमलवनं नोद्घटति, तथापि सर्वैस्तत्कपाटद्वयं स्पर्शितं. परं तन्नोद्घटितं. तदा श्रीपालकुमारोऽश्वरत्नात्समुत्तीर्योत्तरासंगं च विधाय निस्सिहिशब्दमुच्चरन् विधिपूर्वकं भक्त्या संचरन् रंगमंडपे समाजगाम, ततो मूलमंडपद्वारकपाटद्वयसमीपे समागत्य स नवपदध्यानं कृतवान्. तत्क्षणान्महानादपूर्वकं तत्कपाटद्वयमुद्घटितं. ततः श्रीपालकुमारश्चंदनकुंकुमादिपूजासामग्रीं गृहीत्वा निर्मलजलेन स्नात्वा शुद्धवस्त्राभरणादि परिधाय जिनबिंबस्य पूजां विधाय श्रीऋषभदेवप्रभोः कंठेऽम्लानसुरभिकुसुममालां स्थापयित्वा फलादि च ढौकयित्वा चैत्यवंदनमकरोत्. तदा स्वपुत्रीमदनमंजूषासहितो विद्याधरनृपोऽपि शीघ्रं तत्र समागतः, महदाश्चर्ययुतः कुमारं पश्यतिस्म. अथ कुमार एवंविधां

स्तुतिं जिनाग्रे पठितुमारब्धवान्—जय त्वं जगदानंद—जय त्वं जगदीश्वर ॥ जय त्वं त्रिजगद्बंधो । जय त्वं त्रिजगत्प्रभो ॥ १ ॥ जय त्वं त्रिजगन्नेत्र । जय त्वं त्रिजगत्पते ॥ जय त्वं त्रिजगन्नाथ । जय त्वं नाभिनंदन ॥ २ ॥ नमस्ते केवलालोक—लोकालोकविलोकिने ॥ नमस्ते भुवनादित्य । भव्यांभोजविकासिने ॥ ३ ॥ नमस्ते सर्वतः सर्प—न्मोहध्वांतविनाशिने ॥ नमस्ते विश्वविख्यात—सर्वनीतिप्रकाशिने ॥ ४ ॥ नमस्ते सर्वकल्याण—कारिणे क्लेशवारिणे ॥ नमस्ते भक्तिमल्लोक—भवसंतापहारिणे ॥ ५ ॥ इत्यादि स्तुतिं कृत्वा श्रीपालो विरराम. श्रीपालकृतां जिनस्तुतिं श्रुत्वा पुत्रीसहितो राजापि जहर्ष, ततः श्रीपालो बाह्यप्रदेशे समागत्य राजानं च नत्वा तत्पार्श्वे स्थितः, राज्ञा पृष्टं भो महाभाग! ते किं कुलं? किं नाम? किं च चरितं? तत् श्रुत्वा कुमारेण चिंतितं, स्वमुखेन स्वस्वरूपं कथमहं वदामि? एवं स कुमारो यावच्चिंतयति तावदेवैको गगनमंडलाच्चारणमुनिस्तत्र समागतस्तं मुनिं दृष्ट्वा सर्वे लोकाः स्वस्थानात्समुत्थिताः, मुनिश्च जिनमंदिरमध्ये गत्वा जिनं च नत्वा बाह्यप्रदेशे स्थितः, सर्वैर्जनैस्तस्मै वंदना कृता. ततो राजादयः सर्वे लोका उचितस्थानेषु समुपविष्टाः, तदा मुनिना च धर्मदेशना प्रारब्धा.

भो भव्या जिनधर्मे त्रीणि तत्वानि संति, देवतत्वं १ गुरुतत्वं २ धर्मतत्वं च ३ तत्र देवतत्वस्य द्वौ भेदौ, अर्हत्पदं १ सिद्धपदं २ च. गुरुतत्वस्य त्रयो भेदाः, आचार्यपदं १ उपाध्यायपदं २ साधुपदं ३ चेति. धर्मतत्वस्य चत्वारो भेदाः, दर्शनपदं १ ज्ञानपदं २ चारित्रपदं ३ तपःपदं ४ चेति. एभिर्नवपदैः सिद्धचक्रं भवति. अस्य श्रीसिद्धचक्रस्य ध्यानं राज्यकरं त्रिजगत्पूज्यपदप्रदं सुखदं कुष्टादिरोगहरं नेत्रज्योतिष्करं सर्वकार्येषु च ध्येयं मोक्षसुखदायकं च भवति, क इव? श्रीपाल इव. तत् श्रुत्वा राजावादीत कोऽसौ श्रीपालः? गुरुणा प्रोक्तं हे राजन्! स श्रीपालोऽयं तव पार्श्वे एव स्थितोऽस्ति. तदा राजा प्राह हे गुरोऽस्य सर्वं चरित्रं कथ्यतां? तदा गुरुणापि जिनमंदिरकपाटोद्घाटनपर्यंतं सकलमपि श्रीपालचरित्रं नृपादिसर्वजनसभासमक्षं गदितं, पुनः प्रोक्तं च भो लोका अयं श्रीपालकुमारोऽग्रेऽपि श्रीसिद्धचक्रप्रभावाद् भूरिराजकन्यानां भर्त्ता भविष्यति, स्वपितूः राज्यं च गृहिष्यति, अंते च श्रीनवपदध्याने लीनः सन् नवमे देवलोके देवत्वं प्राप्स्यति, ततश्च्युत्वा पुनर्मनुष्यः, एवं श्रीपालभवान्नवमे भवे च स मोक्षं प्रयास्यति, इति तस्य चत्वारो देवभवाः पंच मनुष्यभवाश्च भविष्यंति. एवंविधं चारणमुनिमुखात् श्रीपालचरित्रं श्रुत्वा विद्याधरनृपस्तेन

कुमारेण सह निजस्थाने समागत्य विवाहसामग्रीं च कृत्वा महामहोत्सवैस्तेन सार्द्धं स्वपुत्र्या मद-नमंजूषायाः पाणिग्रहणं चकार. करमोचनावसरे चात्यंतं हर्षितो महीपतिर्मणिकंचनरत्नभूषणगजाश्वदासदासीपरिवारं श्रीपालाय दत्तवान्. एवं श्रीपालस्येह महती प्रतिष्ठा जाता, नृपदत्तावासे च द्वाभ्यां स्त्रीभ्यां सह श्रीपालः सुर इव सुखेन स्वकालं निनाय. जिनमंदिरे स नित्यं पूजां करोति साधुभ्यो दानं च ददाति, एवं स निजां लक्ष्मीं सफलीकरोतिस्म. अथ श्रीपालेन चैत्रमासे शुक्ल-सप्तमीतः श्रीसिद्धचक्रस्य पूजा पूर्वोक्तविधिना समारब्धा, नवमे दिवसे महाविस्तरेण महतीं पूजां कृत्वा भावपूर्वकं साधर्मिवात्सल्यं च विधाय स सुखेन तस्थौ.

अथान्यस्मिन् दिवसे श्रीपालेन सह राजा जिनमंदिरे विस्तरेण पूजां कुरुते, इतः कोट्टपालस्तत्र समागतः, अंजलिं च मस्तके कृत्वाऽवदत्. भो राजन्! पोतेषु समागतेनैकेन महाडुष्टपापिष्टपुरुषेण करभंगश्चाज्ञाभंगश्च कृतोऽस्ति, तं बंधनैर्बद्ध्वाहमत्रानीतवानस्मि, तत्प्रति भवतां यथादेशो भवेत्तथा करोमि. तत् श्रुत्वा राज्ञा प्रोक्तं यदि तेन ममाज्ञाभंगः कृतो भवेत्तदा तस्य प्राणापहारदंडो देयः, तदा डुर्गपालेनोक्तं हे स्वामिन् भवतामादेशः प्रमाणं. तदा श्रीपालो नृपमवोचत्

हे राजन् जिनमंदिरे स्थितैर्युष्माभिः प्राणापहाराज्ञादानमयोग्यं, तत् श्रुत्वा राज्ञोक्तं हे कुमार! तव वचनं सत्यमेवास्ति. ततो राज्ञा दुर्गपालाय समादिष्टं, भो दुर्गपाल! तं पुरुषं बंधनरहितं कृत्वात्रैव मम पार्श्वे समानय? दुर्गपालोऽपि तं मुक्तबंधनं विधाय जिनमंदिरे नृपसमीपे समानीतवान्. तदा श्रीपालकुमारेण तं धवलश्रेष्टिनं समुपलक्ष्य राज्ञे कथितं, हे राजन् एष तु धवलनामा श्रेष्टी मम पितृतुल्योऽस्ति, अस्य सार्थेऽहमप्यत्र समागतोऽस्मि. ततो युष्माभिस्तस्य सन्मानं कर्त्तुं युक्तं. तत् श्रुत्वा राज्ञा वस्त्रादिदानेन स सन्मानितः, ततः कुमारेण धवलः संबोधितः, भो धवलश्रेष्टिन् राजकरत्यागदाने त्वं लोभं मा कुरु? करदानं दत्वा स्वस्थाने व्रज? ततो धवलेन तथा कृतं, अथ स समुद्रोपकंठे समागत्य पोतेषु स्वक्रयाणकानि भृत्वा स्वदेशंप्रति गंतुकामोऽभूत. तदैकेन व्यापारिणा श्रीपालपार्श्वे समागत्य प्रोक्तं हे स्वामिन् धवलादिसर्वसांयात्रिका अथ स्वदेशंप्रतिगमने सावधानाः संजाताः संति, अतो युष्माभिरपि तत्र तूर्णमेवागंतव्यं. तत् श्रुत्वा श्रीपालकुमारो राज्ञ आदेशं गृहीत्वा भार्याद्वयेन सह विद्याधरनृपकृतमहोत्सवपुरस्सरं निजप्रवहणे संप्राप्तः, कनककेतुराजापि स्वसुतायै मदनमंजूषायै समुचितां शिक्षां दत्वा श्रीपालाय च समर्प्य स्वपुरींप्रति जगाम.

अथ श्रीपालकुमारो भडकन्नावं मनसि धारयन् धवलश्रेष्टिनं निजप्रवहणे स्थापितवान्, शेषजनांश्चान्यपोतेषु स्थापयामास. प्रस्थानज्नेरी वाजिता, तदैव च सर्वाणि प्रवहणानि पवनवेगेन महासागरे चेलुः. यथा विमानेन देवश्चलति तथा धवलयुतः श्रीपालकुमारोऽपि स्वपोतेन समुद्रमध्ये चचाल. अथ कुमारस्य रमणीयस्त्रीरत्नद्वयं ऋद्धिविस्तारं च दृष्ट्वा धवलो हृदयेऽत्यंतं जज्वाल, व्यचिंतच्च अहो अयमेकाक्येव मम संगे समागतः, अधुना च स कीदृशो जातः? एवमहर्निशं चिंतां कुर्वन् स रात्रौ निद्रामपि सुखेन नालज्नत. महालोभी कृतघ्नो विश्वासघातकः स धवलः कुमारस्योपरि सदैव द्वेषं वहन् शरीरेणापि डुर्बलो जातः, अहो मे द्रव्यमप्यर्द्धं संजातं, सांप्रतं किं क्रियते? एवं चिंतातुरस्य तस्य बुभुक्षा पिपासापि च विनाशं प्राप्ता, क्षणं शय्यायां पतति पुनश्चोत्तिष्ठति; एवंविधस्य चिंतातुरस्य धवलस्य स्वरूपं तस्य चतुर्भिर्मित्रैर्ज्ञातं, तदा तैरुक्तं भो मित्र! दिनंदिनंप्रति तव शरीरं किं क्षीयते? तव शरीरे का व्याधिर्वर्त्तते? अथवा ते मनसि किं काचिदप्याधिः समुत्पन्नास्ति? सत्यं कथय तव किं जातमस्ति? तत् श्रुत्वा निर्लज्जो धवलः प्राह भो मित्राणि! युष्माकं ममोपरि परंपरागता महती प्रीतिरस्ति, तस्मादहं भवतामग्रे मम मानसस्थितं सत्यमेवाभि-

प्रायं कथयामि. परं सा वार्त्ता युष्माभिः कस्याप्यन्यस्याग्रे नैव प्रकाशनीया, तत् श्रुत्वा तैरपि धवलस्य तद्वचनमंगीकृतं. अथेर्षारूपमानसिकव्याधिना प्रपीडितो धवलश्रेष्ठी प्राह भो मित्राणि! अयं श्रीपालकुमारः केवलमेकाक्येव नरोऽस्ति, तस्य पार्श्वे स्त्रीरत्नद्वयं महती ऋद्धिश्चास्ति, तत्सर्वं केनाप्युपायेनास्माभिर्ग्राह्यं, यथास्माकं सर्वेषामपीष्टसिद्धिर्भवेत्, अतः श्रीपालस्य व्यापादने ध्रुवमस्माभिः कोऽपि प्रयोगः कर्त्तव्य एव. तदा तेषां चतुर्णां मध्ये य एको दुष्टोऽभूत् स तु मौनं विधाय स्थितः, अन्ये चोत्तमास्त्रयः श्रेष्ठिनंप्रति कथयामासुः भो श्रेष्ठिन् कस्यापि वित्तहरणं परस्त्रीहरणं च सत्पुरुषाणां सर्वथैव न युक्तं. उपकारिणां प्रति तु विशेषेण तत्करणमयुक्तं, तत्करणे महान् दोषोऽस्ति तस्य फलमपि च दारुणमस्ति. प्राणिनां वधबंधनादिचिंतनं निश्चितं नरकप्रदमेव भवति, यदि त्वमेतादृशं महाघोरं पापकार्यं चिंतयिष्यसि तदा तेऽवश्यं व्यापादनं भविष्यति. यतोऽयं श्रीपालो महाधर्मी परोपकारैकदक्षस्त्यागी भोगी दाता भाग्यवांश्चास्ति, अस्योपरि चेत्त्वं द्वेषं विधास्यसि तदा तवेदं पारावारापारपारप्रापणं दुष्करमेव भविष्यति, अस्य पुण्यबलेन तस्योपरि त्वत्कृताः केऽप्युपाया नैव सफला भविष्यंति. अथैतद्वार्त्ताकथनेन तव मनसि मनाग्लज्जापि न समुत्पन्ना,

अतो धिक् त्वां, अद्यप्रभृति त्वयास्माभिः सह भाषणमपि न कर्त्तव्यं, त्वं महादुष्टः पापिष्ठोऽसि, ते मुखे दृष्टेऽपि पापं लगति, अरे निर्लज्ज! सांप्रतमेव श्रीपालकृतोपकारास्त्वया किं विस्मृताः? तेन तव पोताश्चालिताः, महाकालान्मोचितः, रत्नद्वीपे त्वं मरणाद्रक्षितः, एवंविधास्तेन कृताः सर्वेऽप्युपकारास्त्वया विस्मृताः, अतस्त्वं खलो द्विजिह्वो मलिनः कुटिलमतिः परछिद्ररतः भीषणकंटकतुल्योऽसि, कृष्णसर्प इव पयःपायिनमेव दष्टुं त्वं वांछसि, पुनस्त्वं किंपाकफलसदृश एव दृश्यसे, हे धवल! त्वयेदृशं पापं कदापि नैव कर्त्तव्यं, त्वत्कृतोपायेनास्य न किमपि भविष्यति, अरे ते नाम तु धवलमस्ति, परमंतस्त्वं कालोऽसि, तव हृदि कृष्णलेश्यया निवासः कृतो विलोक्यते, तव दर्शनेनापि वयं मलिना जाताः स्मः, हे द्वेषधारक! हे दुष्टगतिगामिन्! अस्मिन् कार्ये कृते तवानिष्टमेव भविष्यति. यदुक्तं—अनाचारे मतिर्यस्य । स हंति जन्मनोर्द्वयं ॥ दुर्गतिः परलोकेऽस्य । लोके चात्र विडंबना ॥ १ ॥ अस्मिन् नीचकार्ये यः कोऽपि तव सम्मतिं सहायं च दास्यति स तव शत्रुरेव त्वया ज्ञेयः, इत्यादिशिक्षावचनानि धवलंप्रत्युक्त्वा ते त्रयोऽपि सुहृदो निजस्थाने गताः, परंतु तस्य दुष्टहृदयस्य धवलस्य मनसि तेषां हितवचनानां मनागपि हितचिंतनत्वं न समागतं.

अथ तेन तृतीयेन कुबुद्धिमित्रेण धवलस्योक्तं हे मित्र! एषामग्रे त्वया हृदयस्य गुप्ता वार्त्ता न प्रकाश्या, एते त्रयोऽपि तव शत्रवः संति, तेषामुपरि त्वया मित्रबुद्धिर्न धार्या, अहमेक एव तव हितचिंतकः सुहृदस्मि, सोऽपि चाहं लक्षमित्रसमानोऽस्मि. अथ यथाहं तव कथयामि तथैव त्वया स्वमनोरथान् सफलीकर्त्तुं कार्यं, अधुना त्वं श्रीपालेन सह मनोबाह्यमपि विशेषेण प्रीतिभावं वचनादिना प्रकटीकुरु? तथा कृत्वा च श्रीपालमनसि विश्वासं समुत्पादय? तत् श्रुत्वा प्रसन्नचित्तो धवलः प्राह भो त्वमेव मे परममित्रं, त्वमेव मे वल्लभः, त्वमेव मे कार्यकर्त्ता, तुभ्यमहं वांछितफलं दास्यामि. अथास्य श्रीपालस्य व्यापादनाय कंचिदुपायं विचारय. एवंविधानि श्रेष्ठिवाक्यानि श्रुत्वा स दुष्टसुहृत्प्राह प्रवहणस्य मंचिकायां त्वया कुतूहलालोकनकृते श्रीपालः समानेतव्यस्तदैवाहं मंचिकादवरकान् शस्त्रेण छेदयिष्यामि, ततस्तत्कालमावयोः सर्वकार्यसिद्धिर्भविष्यति, एवं गुप्तमंत्रं कृत्वा स दुष्टो निजस्थाने गतः. अथ धवलेन कुमारेण सह मनोबाह्यामप्यपूर्वां प्रीतिं कर्त्तुं समारब्धं, कुमारोऽपि भद्रकत्वात्तत्संगे लीनोऽभवत्. धवलस्योपरि कुमारस्य महान् विश्वासः समुत्पन्नस्तेन स धवलस्यैव पार्श्वे भोजनपुष्पतांबूलविलेपनगीतनृत्यकुतूहलकथास्नानादिसकलक्रियाः करोति.

सागरमध्ये नानाप्रकारजलचरजंतुकृतविविधाश्चर्याणि च स पश्यति. एवं श्रीपालकुमारस्तस्य श्रेष्टिनः परमसुहृत्संजातः, अथ तेन दुष्टधवलश्रेष्टिना प्रवहणस्याग्रभागे दवरकैरुच्चैर्मंचिका बद्धा, तत्र स्थितो धवलः कौतुकानि विलोकयति.

अन्यदा रात्रौ तस्यां मंचिकायां स्थितो धवलः कुमारंप्रति प्राह, भो कुमार अद्य सागरेऽत्रातिरम्यं कौतुकं दृश्यते, मया तु कदाचिदप्येवंविधमाश्चर्यं न दृष्टं, अद्यापि तदाश्चर्यमत्र स्थाने वर्त्तते, चेद् द्रष्टुमिच्छा तर्हि शीघ्रमत्र समागच्छ? तत् श्रुत्वा कुमारः प्राह भो कुत्रास्ति तत्कौतुकं? तेनोक्तं तूर्णमागच्छ? श्रेष्टिनैवं प्रोक्तः कुमारोऽपि त्वरितं पूर्वकर्मसंयोगेन मंचिकायामारूढः, धवलस्तु चपलं पोतमध्ये समागतः, अथ कुमारोऽधोमुखः सन् सागरे पश्यति, इतो धवलस्य तेन दुष्टमित्रेण मंचिकादवरकाः कर्त्रितास्तेन तत्क्षणमेव श्रीपालकुमारो महासागरे पतन् नवपदध्यानं कृतवान्, चपलमेव तत्रैको मकरः समागतस्तस्य पृष्टे कुमारः स्थिरीभूतः, नवपदसध्यानेन जलतरण्यौषधीप्रभावेण च स मकरपृष्टस्थितः सन् कुंकणदेशतटे संप्राप्तः, तदा श्रीपालो मकरमत्स्यपीठात समुत्तीर्य भूमौ समागत्य तत्र कानने चंपकतरोस्तले सुष्वाप.

अथ यदा स जागृतस्तदा स्वपार्श्वे स्थितान् शुभ्रवेषधरान् कतिचित्सुभटान् ददर्श. तैः सुभटै-रुक्तं हे नाथ! इह कुंकणदेशे प्रतिष्ठानपुरे वसुपालनामा राजास्ति, तेन वयमिति समादिष्टाःस्मः, भो सुभटा अद्य जलधितटे अपरावर्त्तितछाये चंपकतरोस्तले यो नरः सुप्तो भवेत् स नरोऽश्वरत्न-स्योपरि समारोप्य दिनस्य पश्चिमे यामे विनयेन सह मम पार्श्वे समानेतव्यः, अथास्माभिरेवंविधो नरस्तत्र त्वमेव दृष्टोऽसि, अतस्त्वमस्माकं राज्ञः समीपं समागच्छ? तत् श्रुत्वा कुमारोऽपि सद्य एव तुरंगरत्नोपरि समारुह्य तैः सुभटैः सह चलन् सन् प्रतिष्ठानपुरपरिसरे संप्राप्तः, तदा राजा वसुपालो-ऽपि सन्मुखं समागतः, ततः श्रीपालेन सह राज्ञा स्वपुरे महोत्सवपूर्वकं प्रवेशः कृतः, राजसभा-यामागत्य स श्रीपालकुमारं सिंहासने स्थापयामास. ततो राज्ञा श्रीपालकुमारस्य नानाविधविनयं कृत्वा प्रोक्तं भो कुमार! मया पूर्वमेको नैमित्तिकः पृष्टः, भो नैमित्तिक! मम मदनमंजरीनामक-न्यायाः को वरो भविष्यतीति. तत् श्रुत्वा तेन नैमित्तिकेन प्रोक्तं वैशाखशुक्लदशमीदिवसे पश्चिमे यामे जलधितटे अनपगतछाये चंपकतरोस्तले यो नरः सुप्तो भवेत् स ते कन्याया वरो भविष्य-ति, सा दशमीतिथिरद्यैवास्ति, यथोक्तभूतश्चाद्य त्वं जलनिधितटे मिलितस्ततस्तन्नैमित्तिकोक्तं सत्य-

मेव जातं. अतो मे कन्याया मदनमंजर्यास्त्वं पाणिग्रहणं कुरु? तत् श्रुत्वा कुमारेणापि तत्प्रतिपन्नं, राज्ञापि चपलं विवाहयोग्यसामग्रीं मेलयित्वा तयोः पाणिग्रहणं कारितं. करमोचनसमये तेन श्रीपालाय च गजाश्वमणिमाणिक्यादिभूरिदानं दत्तं, तत्र श्रीपालो निजजायया सह विविधविलासानुपभुंजानो नृपदत्तमंदिरे स्थितः सन् सुखान्यनुभवति. अथ श्रीपालाय राज्ञोक्तं, भो कुमार! त्वं स्वराज्यकृते किंचिन्नगरग्रामादिकं गृहाण? तदा समयज्ञेन श्रीपालेन राज्ञस्तांबूलदानकार्यं गृहीतं. एवं श्रीपालकुमारस्तत्र निजस्त्रिया सह विषयसुखं भुंजानः स्थितोऽस्ति.

अथ श्रीपालस्य महासागरांतः पतनानंतरं दुष्टो धवलः कपटेन स्वशीर्षं स्फोटयित्वा हृदयं ताडयन् महता शब्देन रुदनं करोति. अरे! मम स्वामी श्रीपालः सागरे पतितः, अथाहं किं करोमि? तत् श्रुत्वा सर्वेषु यानपात्रेषु महाकोलाहलो जातः. श्रीपालस्य स्त्रीद्वयेनापि कर्णशूलतुल्यं वज्रपातसदृशं च पत्युर्जलधौ पतनं श्रुत्वा मुक्तकंठं विलापं कर्त्तुं प्रारब्धं, ते हाहारवं कुर्वंत्यौ पोतभूमावपततां, तयोश्च मूर्छा समागता दासीभिर्जलसिंचने कृते सति ते चैतन्यं लेभाते. चैतन्यप्राप्त्यनंतरं मुक्तकेशपाशे ते बहुविलापं चक्रतुः, हा प्राणनाथ हा गुणालय हा हृदयसार हा कमल-

नयन हा सुखशयन हा चंद्रवदन हा कामसदन हा स्वामिन् त्वं कुत्र गतः? आवयोर्मरणं त्वया कथं न कृतं? हा हा अस्मिन् समये यद्दुःखमावयोर्भवति तत्तु निश्चितं ज्ञानिनामेव गम्यमस्ति. आवयोः पितृगृहमपि दूरे परतटे स्थितं, आवयोरत्र कस्याधारः? एवं निखिलरात्रौ ताभ्यां नानाप्रकारविलापवचनै रुदनं कृतं. अथैतयोर्विलापं श्रुत्वा तयोराश्वासनार्थं दुष्टमतिर्धवलस्तत्र समागतः, प्रथमं तु श्रीपालकृते कृत्रिमविलापैर्दुःखं दर्शयित्वा पश्चात्स प्रोवाच. हे सुंदर्यौ युवाभ्यां मदाज्ञा नोल्लंघनीया, ततो युवयोः सुखं भविष्यति. तस्येति मर्मभिद्वचनैस्ताभ्यां शीघ्रमेव ज्ञातं यज्जलधौ पतिपतनं ध्रुवमनेन दुष्टेनैव कृतमस्ति. ततस्ताभ्यां रुदनं त्यक्त्वा निजचित्तं च दृढीकृत्य स्वशीलरक्षार्थमिष्टदेवतास्मरणं कृतं. इतः समुद्रमध्ये महोत्पातः समुद्भूतः, कल्पांतकाल इव महावातैर्जलधेर्जलं समुच्छलितुं लग्नं, महाभयंकरा महांतो जलकल्लोलाः सर्वत्रोच्छल्यमाना ददृशिरे, ततो गगनमंडलेऽत्यंतभयंकरा सर्वतो विस्तीर्णतमस्ततिदुरालोका घनाघनघटा समुद्भूता कल्पांतकालोद्भूतमुशलधाराभिर्जलं वर्षतिस्म, तडिल्लताश्च प्रादुर्भूता, ब्रह्मांडभांडोदरस्फोटनसमर्थघनगर्जध्वनयोऽश्रूयंत, उच्छलल्लोलजलकल्लोलैराकुलीभूतयानपात्रेषु लोका महाक्षोभं प्रापुः, भयभीताश्च भयंकरारवैः

कोलाहलं चक्रुः, निजनिजेष्टदेवानां च स्मरणं व्यधुः, एनमुत्पातं दृष्ट्वा यानपात्रस्थिता लोका व्यचिंतयन् निश्चितमद्य पोतस्वामी श्रीपालः समुद्रजले पतितो धवलेन च महाघोरं पापं कृतं, अथ कस्य पुण्येन वयं जलधेः पारं व्रजामः? एवं चिंतयंतोऽथ कंपमानास्ते दानपुण्यानि चक्रुः, पोतानां कूपस्तंभा वायुनास्फाल्यमानास्त्रटत् त्रटत् शब्दानि चक्रुः, सर्वतो विस्तृततमःस्तोमेन परस्परं ते न पश्यंतिस्म. इतः प्रथमं डमडमशब्दं कुर्वंतं डमरुं करे धारयन् द्वितीयकरे च करवालं नर्त्तयन् अत्यंतं रुद्ररूपधरः क्षेत्रपालः प्रकटीबभूव. ततो मानभद्रः १ पूर्णभद्रः २ कपिलः ३ पिंगलश्च ४ इमे चत्वारो महाविकराला मुद्गरहस्ता वीराः प्रकटिताः, तदैव देववाणी जाता, भो प्रथमं तं दुर्बुद्धिदायकं सर्वानर्थसार्थानां च मूलमेनं धवलमित्रं गृहाण गृहाण? इतः श्रीसिद्धचक्रस्य कुमुदः १ अंजनो २ वामनः ३ पुष्पदंत ४ श्चेति चत्वारः प्रतिहारा दंडहस्ताः समागताः, ततो बहुदेवदेवीसहिता जाज्वल्यमानं चक्रं हस्ते भ्रामयंती चक्रेश्वरी देवी प्रकटीबभूव. तया भणितं च हे वीर! एनं दवरककर्त्तनकर्त्तारं नरं गृहाण? ततो झटिति क्षेत्रपालस्तं दुष्टसुहृदं बंधनैर्बध्ध्वा कूपस्तंभेऽधोऽमुखमवलंबितवान्, खड्गेन च तत्सर्वांगानि छेदयित्वा शांतिकरणार्थमिव दशदिक्षु बलिदानं ददौ, तद्

दृष्ट्वा धवलो भयभीतः सन् तयोः प्रमदयोः पादेषु प्रणम्य प्रोवाच, हे महासत्यौ मां रक्ष रक्ष? सांप्रतं युवयोरेव मम शरणमस्ति. एवंविधानि धवलस्य वचांसि श्रुत्वा चक्रेश्वरी प्राह रे दुष्ट पापिष्ट धृष्ट अधुना त्वयैतयोर्महासत्योः शरणं यदंगीकृतमस्ति तत एव त्वां जीवंतं मुंचामि, अन्यथानेन चक्रेणैव तव शिरश्छेदो भवेत्. एवं धवलंप्रति प्रोच्याथ सा चक्रेश्वरीदेवी तयोः प्रमदयोः प्रत्युवाच, हे वत्से! वल्लभो वां महालक्ष्म्या । संपूर्णः संमिलिष्यति ॥ मासस्याभ्यंतरे वत्से । खेदं न कुरुतं युवां ॥ १ ॥ तत् श्रुत्वा प्राप्तहर्षे ते प्रमदे चक्रेश्वरीं देवींप्रति विज्ञपयामासतुः, हे मातरस्य दुष्टस्यावयोर्यथा भयो न भवेत् तथा त्वं कुरु? तदा तया देव्या तयोः प्रमदयोः कंठयोरम्लाने सुरकुसुममाले प्रक्षिप्ते. प्रोक्तं च हे वत्से अस्या मालायाः प्रभावेणायं दुष्टो वांप्रति स्वदृष्टिमपि कर्त्तुं नैव समर्थो भविष्यति. इत्युक्त्वा सा देवी स्वपरिवारयुता स्वस्थाने प्रयाता. महासागरे पोतेषु च सर्वतः शांतिर्विस्तृता. अथ ते त्रयोऽपि सत्पुरुषा धवलंप्रति कथयंतिस्म, हे श्रेष्ठिन् दृष्टं तव कुबुद्धिदायकस्य मित्रस्य किं जातं? ततो ये परधनेषु परस्त्रीषु चाभिलाषं कुर्वंति तेषां सर्वदेयमेव गतिर्भवति, तैरपि कथितमपि तेन न मानितं, अथ तेषु यानपात्रेषु जलधौ वहमानेषु सत्सु

कियद्दिनानि गतानि. तदा पुनरपि धवलश्चिंतयति, ध्रुवमद्यापि मे पुण्यं वर्त्तते, अन्यथैवंविधमपि कष्टं कथं प्रलयं गच्छेत्, ततोऽधुना श्रीपालस्य स्त्रीलक्ष्म्यादि यदि मम हस्ते समागच्छेत्तदाहं खलु शक्रतुल्यो भवेयं, ततस्तयोः प्रमदयोर्वशीकरणे मया कोऽप्युपायोऽधुना कर्त्तव्य एव. अथान्येद्युः कामग्रहग्रथिलः सन् स नारीवेषं विधाय तयोः पोते संप्राप्तः, तयोः समीपे यावत्स गतस्तावदेव देवमालाप्रभावात् सोंधो जातो दिङ्मूढत्वाच्चेतस्ततः पततिस्म. तदा तयोर्दासीभिस्तं धवलं ज्ञात्वा यष्टिमुष्टिभिः पादप्रहारैर्हस्ततलैश्च ताडयित्वा तच्छरीरं जर्जरीभूतं कृतं. महाकष्टेन नष्टः सन् स स्वपोते समागतः. अथ ते पोता धवलेप्सितमार्गं त्यक्त्वा दैवयोगात् स्वयमेव कुंकणदेशतटे प्राप्ताः, तदा धवलः पोतात्समुत्तीर्य बहुमूल्यं प्राभृतं च गृहीत्वा राज्ञः पार्श्वे समागतः, तत्र तेन श्रीपालकुमारो राज्ञः समीपे स्थितो दृष्टः श्याममुखश्च स संजातः, मनसि च चिंतयामास किं स एवैषः श्रीपालो वान्यः कोऽपीति, तदा श्रीपालेनापि धवल उपलक्षितः, ततो धवलः क्षणंयावद्राज्ञः प्रतिपत्तिं कृतवान्, गमनसमये च श्रीपालहस्तात्तांबूलं गृहीत्वा मनसि चिंताक्रांतः सन् बहिः प्रदेशे समागत्य राज्ञः प्रतिहारं पृष्टवान्, भो प्रतिहार! राज्ञः पार्श्वे यस्तांबूलदायकः स्थितोऽस्ति स कोऽस्ति?

तेनापि कुमारस्य सर्वमपि चरितं श्रेष्टिनोऽग्रे कथितं, तत् श्रुत्वा श्रेष्टी तु वज्राहत इव महादुःखं प्राप्तः, निजचेतसि च चिंतयामास हा अहं यदपि कार्यं करोमि तत्सकलमपि निष्फलमेव भवति, परमधुनाऽस्य मारणोपायो मया विधेयः, परं किं करोमि? अत्राप्ययं राज्ञो जामाता जातः स कथं हन्यते, एवं विविधकुविकल्पांदोलितमानसश्चिंतासमाक्रांतः सन् धवलो निजस्थाने संप्राप्तः.

इतो नृत्यगायनादिविविधकलानिपुणा डुंबाख्या गायकास्तं धनवंतं श्रेष्टिनं समागतं श्रुत्वा घनधनलिप्सया तस्य पार्श्वे स्वकलाकलापं दर्शयितुं समागताः, तैर्गायनकृत्यादि कृत्वा श्रेष्टिनोऽग्रे स्वकलानैपुण्यं प्रकटीकृतं, परं चिंतासमाक्रांतचित्तेन श्रेष्टिना तेभ्योऽतिस्तोकं दानं दत्तं, तदा तैर्मातंगैः श्रेष्टिनो व्याकुलं चित्तं ज्ञात्वा कथितं हे श्रेष्टिन् वयमत्र भवतां पार्श्वे घनधनलिप्सया समागताः स्मः, तत् श्रुत्वा श्रेष्टिना तेभ्यः पृष्टं भो मातंगा यूयं वैदेशिका वा एतन्नगरनिवासिनः स्थ? तैरुक्तं हे श्रेष्टिन् वयं वैदेशिकाः स्मः. तदा श्रेष्टिना तेभ्यः प्रोक्तं हे मातंगा यूयं कमप्युपायं कृत्वैनं वैदेशिकं राज्ञो जामातरं मारयत? यदैतन्मम कार्यं यूयं करिष्यथ तदा युष्मभ्यमहं युष्मदभीप्सितं घनधनदानं दास्ये. परं तस्य व्यापादने यूयं कमुपायं करिष्यथ तद्वदत? तैरुक्तं हे श्रेष्टिन्

वयं तं राज्ञो जामातरमस्मत्कुलोद्भवं ज्ञापयिष्यामस्ततो राजा स्वयमेव तं मातंगं ज्ञात्वा मारयिष्यति. तत् श्रुत्वात्यंतं हर्षितः श्रेष्टी प्रोवाच हे मातंगा युष्माकमयमुपायः समीचीनोऽस्ति मह्यमपि स रोचते. किंच यदा यूयमेतन्मम कार्यं संपूर्णं करिष्यथ तदाहमपि युष्मभ्यं बहुद्रव्यं दास्ये. एवमुक्त्वा तेषां तुष्टिकृते तदापि श्रेष्टिना तेभ्यः कोटिमूल्या मुद्रिका दत्ता. ततस्तेन विसर्जितास्ते मातंगाः स्वकीयसमग्रां सामग्रीं कृत्वा रम्यवस्त्रादिकं च परिधाय निजकुटुंबसहिता राजसभासमीपे समागत्य राज्ञोऽग्रे विविधगीतनृत्यादिनिजकलाकलापं दर्शयामासुः, तेषां कर्णनेत्रतृप्तिकरं कलाकलापं समनुभूयात्यंतं संप्राप्तप्रमोदभरो धरणीधवस्तेभ्यः कथयामास, भो मातंगा अहं युष्मद्गाननृत्यादिकलाभिः संतुष्टोऽस्मि, ततो वांछितार्थसार्थं याचध्वं, तत् श्रुत्वा ते प्रोचुर्हे नाथ अस्माकं धनेन प्रयोजनं न, केवलं मानस्यैवास्माकं प्रयोजनमस्ति, तदा राज्ञा प्रोक्तं भो मातंगा यूयं कं मानमभिलषथ, तैः प्रोक्तं हे राजन्! अस्मभ्यं युष्मज्जामातुर्हस्तेन तांबूलं दापय? राज्ञापि तत्प्रतिपद्य निजजामातुः श्रीपालकुमारस्यप्रति प्रोक्तं हे कुमार एतेभ्यो मातंगेभ्यस्त्वं मानपूर्वकं तांबूलं देहि? तेनापि तथैव कृतं. इतः कुमारस्य पूर्वकर्मविपाकात्तेभ्यो मातंगेभ्य एका जरती शाकिनीव मुक्तके-

श्पाशा समागत्य कुमारकंठे विलग्ना जजल्प च हे पुत्र! त्वं कुत्र गतोऽभूः? बहुसमयेन मिलितः, त्वं कुत्र कुत्र स्थाने भ्रमणमकार्षीः? हे पुत्र प्रथमं मया त्वं सिंहलद्वीपे श्रुतस्ततस्त्वं प्रवहणे चटितस्ततस्ते किमत्रागमनं जातं? एषा तव वधूर्लंबमानपटघुंघटा स्थितास्ति, अस्या अपि त्वत्पत्न्यास्त्वद्विरहोद्भवं दुःखं ते हृदये किं न समागतं? त्वया तु भाग्यवशाद्राजपुत्री परिणीता, परं त्वस्यास्तव भार्यायाः का गतिर्भविष्यति? इतोऽन्या काचिन्मातंगी समागत्य हे भ्रातरिति पूत्कुर्वती कुमारस्य कंठे विलग्ना, एकागत्य प्राह अहं त्वस्य श्वश्रूरस्मि, अपरावोचत् हे ज्येष्ठ त्वं क गतोऽभूः, पुनः कापि मातंगी समागत्य प्राह हे भागिनेय मया त्वं बहु गवेषितस्तथापि कापि न प्राप्तः, अद्य तु त्वां दृष्ट्वाऽहं प्रमोदपूरिता जाता. अपरा प्राह हे देवर त्वं बहुकालेन दृष्टः, पुनरेका जरती समागत्य कुमारं चालिंग्य प्राह हे पौत्र अद्य त्वां दृष्ट्वा मे जन्म सफलं जातं. एको वृद्धो मातंगः समागत्योवाच हे पुत्र त्वद्वियोगेन मे नेत्रयोरश्रूण्यद्यापि नैव शुष्काणि, एकोऽवादीदहं तव श्वशुरोऽस्मि. अन्ये त्रयो मातंगा अवदन् वयं ते भ्रातरः स्मः, एकः प्राहाहं तव पितृव्योऽस्मि. इत्यादिमातंगपरिवारेण कुमारोऽकस्माद्व्याकुलीकृतः.

अथ राज्ञैवंविधं वृत्तांतं दृष्ट्वा चिंतितं अरेऽयं तु महाननर्थो बभूव, मे निर्मले कुलेऽनेन मातंगेन जामाताऽनिवार्यः कलंको दत्तः, अत एष शीघ्रमेव हंतव्यः. इति निजमनसि विचिंत्य राज्ञोक्तं भो दुर्गपाल तं नैमित्तिकं तूर्णमत्र बध्ध्वा समानय? दुर्गपालेनापि चपलमेव गत्वा स नैमित्तिकस्तथाप्रकारः समानीतः, राजा तं प्रत्युवाच अरे दुष्ट! मातंगोऽयमिति त्वया प्रथमं ममाग्रे कुतो न प्रकाशितं, तत् श्रुत्वा नैमित्तिकोऽवादीत् हे राजन् सत्यमस्ति नायं मातंगः किंतु मातंगपतिरेवायमस्ति, कोऽत्र संदेहः? तत श्रुत्वात्यंतं रुष्टो राजा नैमित्तिकं कुमारं च द्वयमपि वधार्थमादिष्टवान्. अथैतत्स्वरूपं मदनमंजर्या विज्ञाय तूर्णं निजपितुः समीपे चागत्य प्रोक्तं हे तात किमिदमविचारितं कार्यं त्वया क्रियते? आचारेणैवास्योत्तमं कुलं त्वया किं न ज्ञायते? कुतोऽविचार्यैव त्वयायमनर्थसार्थः क्रियते? तत् श्रुत्वा राजा कुमारंप्रति प्राह, भो कुमार त्वं स्वकीयं कुलं तूर्णं ममाग्रे प्रकाशय? तदा श्रीपालोऽपि किंचिद्विहस्य प्राह इयं लोकोक्तिस्त्वया ध्रुवं सत्यीकृतैव 'यत्प्रथमं पानीयं पीत्वा पश्चाज्जातिः पृष्टव्येति' यत्त्वं सांप्रतं मे कुलं पृच्छसि. अथ ते यदि मम कुलपृच्छनवांछास्ति तदा त्वं स्वसैन्यं सृज? तत्र युद्धे मम कुलप्रकटनं भविष्यति, यत उत्तमजनल-

ज्ञाकारकं स्वमुखस्वकुलवर्णनं नैव करिष्यामि. अथवाधुनैवागतप्रवहणेषु मम स्त्रीद्वयमस्ति, ते समानीय ताभ्यां मे कुलादिपृच्छा त्वया कर्त्तव्या. तत् श्रुत्वा राज्ञा धवलश्रेष्ठिनमाकार्य पृष्टं भो धवल प्रवहणेषु कुमारस्यैतस्य किं स्त्रीद्वयमस्ति? तत् श्रुत्वा धवलः श्याममुखो जातस्तेन मनागप्युत्तरो न दत्तः. तदा राज्ञा निजप्रधानपुरुषास्तत्र पोतेषु तयोर्गवेषणाय प्रेषिताः, तैस्तत्र गत्वा तत्स्त्रीद्वयाग्रे प्रोक्तं हे कन्ये राज्ञा निजकन्याजामातुः कुलादिपृच्छार्थं युवां समाहूते, तत् श्रुत्वा ताभ्यां ज्ञातं नूनमावयोर्वल्लभोऽत्रैव संभवति, निश्चितं तेनैवावां समाहूते इति दृश्यते, ततस्ते शिबिकायां समारुह्य तैः सह राजसभायां समागते, राजापि यवनिकांतरे तत्स्त्रीद्वयं स्थापयित्वा पप्रच्छ हे वत्से ममास्य जामातुर्वंशादिकचरित्रं प्रकाशयतं. तत् श्रुत्वा विद्याधरपुत्री श्रीपालस्य सकलमपि चरित्रं सर्वसभासमक्षं कथयामास. ततः पुनः कथितमयमेवावयोः स्वामी वर्त्तते. इदं श्रीपालस्य चरित्रं श्रुत्वा राजा हर्षितः सन्नुवाच अहो मे भगिनीपुत्रोऽयं वर्त्तते. अस्मै मया यन्मे पुत्री परिणायिता तत्तु सर्वथैव समीचीनं जातं. अथ राजा तेभ्यो मातंगेभ्योऽत्यंतं कुपितः सन् स्वसुभटानाकार्य कथयामास, भो सुभटास्तान् मातंगान् द्रुतमाकारयत, इति राज्ञ आदेशं श्रुत्वा ते द्रुतं तान् मातं-

गांस्तत्र समानीतवंतः, राज्ञा पृष्टं अरे दुष्टाः सत्यं कथयत कथं युष्माभिरिदं कूटाचरणं समाचरितं? तदा ते भयेन कंपमानाः प्रोचुः हे राजन् पोतेषु समागतधवलेन कोटिमूल्यां मुद्रिकामस्मभ्यं दत्वेदं कार्यं कारितं, ततो राजसुभटैस्ताड्यमानास्ते मातंगाः कथयामासुः हे राजन् एतस्मिन् कार्येऽस्माकमपराधो नास्ति, अतोऽस्मान् मा ताम्यत, कुमारोऽयमस्माकं संबंधी नास्ति. ततो राज्ञा तान् मातंगांस्तत्रैव संस्थाप्य धवलानयनार्थं निजसुभटाः प्रेषिताः. तैश्च गाढबंधनैर्बध्वा स राज्ञः समीपे समानीतस्तदा राज्ञा समादिष्टं भो दुर्गपाल एतन्मातंगकुटुंबसहितं धवलं यमद्वारं प्रापय? तत् श्रुत्वा करुणापरः कुमारो राजानं विज्ञप्य तान् मातंगान् धवलं च मोचयामास. ततो राजा तं नैमित्तिकं समाहूय पृष्टवान् भो नैमित्तिक त्वयापि कथमेष मातंगपतिः कथितः? तेनोक्तं हे राजन् मया तु सत्यमेव कथितमस्ति, मातंगशब्दस्यार्थं यूयं न जानीथ, यतो मातंगा हस्तिनः प्रोच्यंते, तेषां यो नायकः स च मातंगपतिरुच्यते, एवंविधश्चायं श्रीपालकुमारो विद्यते. तत् श्रुत्वा हर्षितो राजा तस्मै भूरिधनं दत्वा तं नैमित्तिकं विससर्ज. निजकन्यायाश्च बुद्धिबलं परीक्ष्य राजातीव प्रमोदभागभूत. श्रीपालेन सह स्वापराधं च क्षामयित्वा सुखेन स्थितः.

अथ श्रीपालोऽपि स्वमहिलाद्वयं गृहीत्वा स्वमंदिरे समागतस्तत्र त्रिभिः पत्नीभिः सहानंदयुक्तः कालं गमयतिस्म. ततः कुमारस्तु सरलत्वात् धवलेन सह तथैव प्रीतिभावयुतः संगं करोति, धवलोऽपि निर्लज्जः सन् सदा तत्रैव स्थितिं चकार. श्रीपालस्य मारणार्थं च सोपयोगः सन् स रात्रौ तत्रैव सुप्तः, एकदा श्रीपालकुमारः स्वावासे सप्तमभूमावेकाकी सुप्तोऽस्ति, तदा धवलेन चिंतितमद्यास्य मारणायावसरोऽस्ति, एवं विचिंत्य स समुत्थाय तद्गृहपृष्टभागे कौशेयदृढदवरकं बध्ध्वा चंदनगोधां चोच्चैः सप्तमभूमौ चटाप्य तदवलंबनेन धवलोऽपि करे करवालं विधाय रौद्रध्यानयुतस्तदुपरि समारुरोह. श्रीपालकुमारस्य पुण्यबलेन तस्य चायुःक्षययोगेनार्धमार्गे एव दवरकस्त्रुटितः, ततः सोऽधोमुखः सन् तत्क्षणमेव भूमौ पपात. तत्करस्थखड्गश्च तस्यैवोदरे प्रविष्टस्तेन स कृष्णलेश्यया कालं कृत्वा सप्तमं नरकं जगाम. ततः प्रभाते जाते लोकास्तत्र मिलिताश्चिंतयामासुश्च नूनमत्र कुमारवधार्थं धवलः समागत इति विचिंत्य सर्वे जनास्तं धिक्कारयामासुः, श्रीपालस्य च यशो विस्तारं प्राप्तं, धवलस्य चापवादो बभूव. इतः श्रीपालकुमारोऽपि तत्र समागतो धवलं च मृतं दृष्ट्वा शोकयुतस्तस्य शरीरस्याग्निसंस्कारं कारयामास. ततस्तस्य मृतकार्यं कृत्वा स सुखेन तत्र स्थि-

तोऽस्ति. तदा स कुमारः पोतस्थितान् सुमतिदायकांस्तांस्त्रीनपि व्यापारिणः समाहूय धवलस्य स्थाने स्थापयामास. कथितं च तेभ्यस्तेन युष्माभिर्धवलधनस्याधुना रक्षा कर्त्तव्या, तैरपि तथा कृतं. अथ तत्र श्रीपालस्त्रिभिर्भार्याभिः सह विषयसुखं भुंजानः सन् स्थितोऽस्ति.

॥ इति श्रीपालचरित्रे गद्यबंधे तृतीयः प्रस्तावः समाप्तः ॥ श्रीरस्तु ॥

———

अथान्यदीने परिवारयुतः श्रीपालो नगरसमीपोद्याने जगाम, तत्र चैकं सार्थमुत्तरितं स ददर्श. तत्र स्थितः सार्थपतिरश्वारूढं कुमारं विलोक्य प्राभृतं गृहीत्वा तस्य समीपे समागतः, कुमारेण पृष्टं भो सार्थपते यूयमत्र कस्मात्स्थानात्समागताः? कुत्र च गमिष्यथ? किमप्याश्चर्यं चेद् दृष्टं भवेत्तदा वदथ? तत् श्रुत्वा सार्थपतिनोक्तं हे महाभाग वयं कांतिनगरात्समागताः कंबुद्वीपे च यास्यामः, मार्गे चास्माभिरेकमाश्चर्यं दृष्टमस्ति. तत त्वं शृणु? इतः स्थानात शतयोजनदूरे कुंभलपुरनामैकं नगरमस्ति, तत्र च मकरकेतुनामराजास्ति, तस्य कर्पूरतिलकाभिधाना राज्ञी वर्त्तते, तत्कुक्षिसंभवौ सुंदरपुरंदराभिधानौ द्वौ पुत्रौ वर्त्तेते, तयोरुपर्येका गुणसुंदर्याह्विया कन्यास्ति, तया चैवं

प्रतिज्ञा कृतास्ति यद्यो मां वीणानादेन जेष्यति स एव मे भर्त्ता नान्यः कोऽपि, तस्या एता प्रतिज्ञां श्रुत्वानेके नृपनंदनाः प्रतिदिनं वीणाभ्यासं कुर्वंति, मासे मासे तेषां च परीक्षा भवति, परमद्यापि केनापि पुरुषेण वीणानादेन सा कन्या जिता नास्ति, मयापि परीक्षासमये सैकदा किन्नरीसमा कन्या दृष्टास्ति, कदाचिद्दैवयोगेन युवयोर्योगः स्यात्तदा वरं, तत् श्रुत्वा हृष्टः कुमारस्तं सार्थपतिं वस्त्रादिभिः संतोष्य सायंकाले गृहे समागतः. अथ तेन चिंतितमेतदाश्चर्यं कया रीत्या दृश्यते? पुनस्तेन चिंतितमहो विकल्पजालेन किं? श्रीनवपदध्यानेनैव नूनं सर्वमपि कार्यं सिद्धं भविष्यति, एवं विचिंत्य स तदैव नवपदध्याने लीनो बभूव. तदा सहसा श्रीसिद्धचक्राधिष्ठायकः सौधर्मकल्पवासी विमलेश्वरनामा देवः करस्थितहारः प्रादुर्बभूव कुमारं प्रति चाह—इच्छाकृतिर्व्योमगतिः कलासु । प्रौढिर्जयः सर्वविषापहारः ॥ कंठस्थिते यत्र भवंत्यवश्यं । कुमार हारं तमिमं गृहाण ॥ ॥ १ ॥ एवं गुणान् प्रोच्य स सिद्धचक्रा—धिष्ठायकः श्रीविमलेशदेवः ॥ कुमारकंठे विनिवेश्य हारं । जगाम धामाद्भुतमात्मधाम ॥ २ ॥ एवं श्रीसिद्धचक्रप्रभावाद्धारं प्राप्य कुमारो निश्चिंतः सन् सुष्वाप, प्रभाते चोत्थितेन तेन कुंडलपुरगमने मनः कृतं, हारप्रभावात्तदैव स तत्र प्राप्तः, अथ

श्रीपाल चण पु०

तत्र तेन तद्वारप्रभावेण विनोदार्थं स्वकीयं कुब्जरूपं कृतं, एवं च स नगरे प्रविष्टो नागरैश्च सकौतुकं विलोकितः, ततः स वीणाहस्तै राजकुमारैः सह वीणाशास्त्रविशारदपाठकपार्श्वे गतः, गत्वा च पाठकंप्रति प्राह भो पाठक! मामपि वीणां वादयितुं शिक्षय? तत् श्रुत्वा ते सर्वे राजकुमाराः खरूखरूशब्दैस्तस्य हास्यं कुर्वाणाः प्रोचुर्भो वामन! तव वीणाभ्यासेन किं कार्यं? तेनोक्तं भवतां तदभ्यासे किं कार्यं? तैरुक्तं वयं तु राजकन्यापरिणयनार्थं वीणाभ्यासं कुर्मः, तत् श्रुत्वा कुब्जेनापि कथितमहमपि तदर्थमेव वीणाभ्यासं करिष्यामि. तदा सर्वैर्हसितं कथितं चाहो भूमिपालकन्या अपि महद्भाग्यमधुना प्रकटीभूतं यत्सैनं कुब्जं तु निश्चयेन परिणयिष्यत्येवेति. कुब्जः प्राह भो कुमारा यूयं सर्वेऽपि निजलोचनानि विकास्य पश्यंत एव स्थास्यथ अहं तु तां कन्यां परिणयिष्यामयेव. इत्युक्त्वा स वामनस्तस्मै वीणापाठकायामूल्यं खरूरत्नमेकं प्राभृतीचकार, तद् गृहीत्वा स कलाचार्योऽपि हृष्टः सन् तस्मै वामनायैकां सुंदरवीणामदात्. तदा वामनोऽपि तां वीणां निजहस्ते समादाय वादयितुं लग्नः, तां वादयता सता सर्वेषां हास्यविनोदार्थं तेन तस्यास्तंत्री त्रोटिता, तुंबी स्फोटिता, दंडीकीलिका दूरीकृता, दंडो भग्नः, एवं कुर्वता तेन कुब्जेन सर्वेषां राजकुमाराणां मह-

हास्यमुत्पादितं, तेऽप्यट्टट्टहासेन हसयामासुः, दानबलेन तेन वामनेन तु पाठको वशीकृतः. अथान्येद्युः कुमार्या वीणाकलापरीक्षार्थं सर्वे राजकुमाराः समाहूताः, वामनोऽपि तत्र जगाम, किंतु तत्र सभायां गच्छन् स प्रतिहारेण निषिद्धः, तदा स तस्मै रत्नजटितं कुंडलमेकं दत्वा तं च संतोष्य सभायां प्रविष्टः, तदा कुमारी तस्य मूलरूपं पश्यति, अन्ये राजकुमारादयः सर्वेऽपि सभाजनास्तस्य कुब्जरूपं च पश्यंतिस्म. तं दृष्ट्वाथ कुमारी निजमनसि चिंतयामास यदि मे महद्भाग्यं भवेत्तदा त्वयमेव कुमारो मम प्रतिज्ञां पूरयेत्, अन्यः कोऽपि मम प्रतिज्ञां पूरयितुं समर्थो नास्ति. लोकैस्तु स वामनः कथ्यते परमहं तु तं सुंदराकारं पुरुषं पश्यामि, इति मम मानसेऽपि तद्विषये महदाश्चर्यं भवति. ततो वीणाकलाचार्येण प्रोक्तं भो राजकुमारा यूयं निजनिजकलाभ्यासमत्र सभासमक्षं प्रकाशयत? तदा सर्वैरपि राजकुमारैर्निजनिजकलाः पृथक्पृथक् प्रकाशिताः, किंतु तेषां ताभिः कलाभिर्नृपकुमार्या मनो नैव रंजितं. ततः कुमार्या स्ववीणा वादिता, तेन लोकाश्च हर्षिताः संतः कन्याया वीणाकलां प्रशंसंतिस्म. तदा वामनो रोषं कृत्वावादीत भो कुंडलपुरवास्तव्यलोकास्तु सर्वेऽपि मूर्खा विलोक्यंते, वृथैव ते कुमारीवादितवीणाप्रशंसां कुर्वंति. तत् श्रुत्वा राजकन्या

वामनमवादीत् भो पुरुष त्वयापि किं वीणानादाभ्यासः कृतोऽस्ति? तेनोक्तं मया तु तत्संबंधिसर्वो-ऽप्यभ्यासः कृतोऽस्ति. तत् श्रुत्वा सा राजकन्या तंप्रति स्ववीणामर्पयत्. तेन च तां वीणां गृहीत्वोक्तं नूनमियं वीणाऽशुद्धा, अस्यास्तंत्री शुद्धा न, तुंबिका गलितास्ति, दंभोऽपि युक्तो न, अग्रकीलिका शुद्धा न, ग्राममूर्छनानादभेदेनेयमयुक्तैव वर्त्तते. तत् श्रुत्वा तया कन्यया विचारितं निश्चितं मम भाग्येन वीणाकलासु निपुणोऽयं समागतोऽस्ति.

ततस्तेन वामनेन तां वीणां विशुद्धीकृत्य वादिता, तदैव सर्वेषामपि सभाजनानां मूर्छा संजाता. तेन केचिद्भूमावितस्ततो लुठंति, केऽपि च निद्रां प्रापुः, तदा तेन वामनेन केषांचिन्मुद्रिकाः, केषां च कुंडलानि, केषां च कटकानि, केषां च मुकुटानि, केषांचिच्चोत्तरीयपटानि गृहीत्वा सभामध्यभागे प्रगुणीकृतानि. मूर्छाप्रांते च ते सर्वेऽपि सभामध्यभागस्थनिजनिजनानावस्तुसंचयं दृष्ट्वाश्चर्यं प्राप्ताः. कुमार्यपि तदाश्चर्यं पश्यंती त्रिलोकसारस्य तस्य श्रीपालकुमारस्य कंठे निजकरस्थितां वरमालां चिक्षेप. तद् दृष्ट्वा राजा स्वहृदये चिंतां चकार हा ममानया पुत्र्या कुब्जो वरो वृत इति. तावत्कुमारेण निजसत्यरूपं प्रकटीकृतं, तदा राजादयः सर्वेऽपि सानंदा जाताः, ततो रा-

ज्ञा महोत्सवपूर्वकं तयोर्विवाहः कारितः, कुमाराय च निवासकृते गजाश्वादिधनकंचनरत्नादियुक्तं गृहं प्रदत्तं, तत्र च स गुणसुंदर्या सह विषयसुखमुपभुंजानः स्थितः.

अथान्यदा श्रीपालकुमारः क्रीडनार्थं नगराद्बहिरुद्याने गतस्तत्र चैकः पथिकस्तेन दृष्टः, तदा कुमारस्तं पथिकंप्रति प्राह भो पथिक! त्वं कस्मात्स्थानादिहागतः कुत्र च गच्छसि? त्वया यदि किमप्याश्चर्यं दृष्टं भवेत्तदा तन्मे निवेदय? तेनोक्तं हे स्वामिन् धनावहश्रेष्टिनाहं कस्मैचित्प्रयोजनाय कुंभनपुरात्प्रतिष्ठानपुरे प्रेषितोऽस्मि. मयैकमाश्चर्यमपि दृष्टमस्ति तत्सावधानतया शृणु—कंचनपुरे वज्रसेननामा राजास्ति, तस्य च कनकमालानामराज्ञी विद्यते, तस्य च यशोधवल १ यशोधर २ वज्रसिंह ३ गंधर्व ४ नामानश्चत्वारः पुत्राः संति, तेषामुपर्येका त्रिलोकसुंदरीत्यभिधाना पुत्री बभूव, तस्या विवाहकृते राज्ञा स्वयंवरमंडपः समारब्धोऽस्ति, स च मंडपः स्वर्णरत्नमयस्तंभैर्विराजमानो विशालः पताकापंक्तिभिः शोभमानश्चतुर्द्वारैर्विभूषितो विचित्रशालभंजिकाभिरभिरम्य उच्चैस्तोरणमालाऽष्टमंगलादिभिर्युक्तो मंचश्रेणिभिर्मंडितः स्वर्गस्थविमान इव विराजते, नानादेशसमुद्भवा भूरिभूपास्तत्र मिलिताः संति. राज्ञापि च तदर्थं भूरितृणधान्यादिसंग्रहः कृतोऽस्ति, सा क-

न्या चाषाढकृष्णद्वितीयायां तत्र निजमानसाभिप्सितं वरं वरिष्यति. सा च द्वितीयातिथिः प्रत्यूषे वर्त्तते, तत्पुरं चास्मात्स्थानात् विंशतयोजनानि दूरमस्ति. इति तस्य पांथकस्य मुखाद्वचनं श्रुत्वा हृष्टः कुमारस्तस्मै चाश्वस्य स्वर्णभूषणं दत्वा स्वयं गृहंप्रति समागतः. पश्चिमनिशायां च निजकुब्जरूपं कृत्वा स कंचनपुरे समागतः, तत्र च स्वयंवरमंडपद्वारे विशन् वेत्रधारिणा स कुब्जो निषिद्धस्तदा तस्मै करकंकणमेकं दत्वा संतोष्य च मंडपांतः प्राविशत्, तत्र चैकस्तंभस्थपुत्तलिकापार्श्वे समुपविष्टः, तस्य कुब्जस्योच्चैः पृष्टप्रदेशः, उदरं संकुचितं, नासा चर्पटिका, ओष्टौ लंबमानौ करभोष्टसदृशौ, रासभदंततुल्या दंताः, कपिलः केशपाशः, पिंगले नेत्रे, पतद्वालोपेतं मुखं चास्ति, एवंविधं कुरूपोपेतं जीर्णदेहधरं तं कुब्जं दृष्ट्वा स्वयंवरमंडपागताम्बरधारिणो धरणीधवकुमारास्तस्य हास्यं कुर्वंतस्तमपृच्छन् भो सुरूपोपेतराजकुमार त्वमत्र किमर्थं समागतोऽसि ? कुब्जः प्राह यूयं किमर्थमत्र समागताः स्थ? तैरुक्तं वयं तु राजसुतां परिणेतुमत्र स्वयंवरमंडपे समागताः स्मः, कुब्जः प्राहाहमपि तदर्थमेव समागतोऽस्मि. इति कुब्जवचनं श्रुत्वा सर्वेऽपि राजकुमाराः खड्खडशब्दैर्हसंतस्तं प्रति प्रोचुः, अहो वामन ! त्वं तु योग्यो महारूपवान् लावण्ययुक्तो वरोऽसि, निश्चितं राजक-

न्या त्वां मुक्त्वान्यं कमपि न वरिष्यति, यतस्त्वत्सदृशो रूपोपेतो वरस्तु दीपकं गृहीत्वा शोध्यमानोऽपि क्वापि न लभ्येत. एवं तेषु हास्यविनोदं कुर्वत्सु सत्सु क्षीरोदकसमवसनाच्छादितदेहभागा करकमलाकलितविमलमाला मुक्ताफलादिविमलनिःसपत्नरत्नाभूषणभूषितांगभागा शिबिकारूढा राजकन्यापि तस्मिन् स्वयंवरमंडपे महताडंबरेण समागता, तस्मिन्नवसरे सा कन्या तु कुमारस्य स्वाभाविकं रूपं दृष्ट्वा स्वमनस्यत्यंतं जहर्ष. कटाक्षबाणोपनीता तयोः परस्परं प्रीतिश्चित्तांतः प्रकटीबभूव. अथ ज्ञातसर्वराजन्यवृत्तांता राजकुमाररूपकुलादिवर्णनैकदक्षचित्ता प्रतिहारी मंचस्थितकुमारश्रेणिपार्श्वे राजकुमारीं समानीय प्रत्येककुमारस्य रूपादिगुणान् वर्णयामास, सा प्रतिहारी यं यं कुमारं वर्णयति तं तं सा राजकन्या विरक्ता सती परिहरतिस्म, अनुक्रमेण सा सर्वराजकुमारवर्गं त्यक्त्वा यत्र कुब्जोऽस्ति तत्र समागता, तदा स्तंभस्थशालभंजिका हारप्रभावेणेडं वाणीं जगाद—यदि धन्यासि विज्ञासि । जानासि च गुणांतरं ॥ तदेनं कुब्जकाकारं । वृणु वत्से नरोत्तमं ॥ १ ॥ इति श्रुत्वा राजकन्या कुब्जाकारस्य तस्य श्रीपालकुमारस्य कंठे तूर्णं वरमालां चिक्षेप. तद् दृष्ट्वा सर्वे राजकुमाराः कुब्जंप्रति प्रोचुः, अरे कुब्ज! त्वमिमां मालां द्रुतं मुंच, अन्यथा ते प्रचंडखड्-

दंडेन मरणं जविष्यति, कन्या त्वियं मूढास्ति, यतस्तया राजहंससदृशं राजकुमारवृंदं त्यक्त्वा त्वं काकसदृशः कुब्जो वृतोऽस्ति. तत् श्रुत्वा कुब्जो हसित्वा प्राह जो राजकुमारा यूयं रोषं मा कुरुत? श्यं राजकन्या नासामलमिव युष्मान् परित्यज्य मामेव परिणेतुमिबति. तत् श्रुत्वात्यंतं कुपितास्ते सर्वेऽपि राजकुमारास्तस्मात्कुब्जाद्दरमालाग्रहणार्थं तस्य च वधार्थं समकालं समागताः, अन्योऽन्यं महासंग्रामो बजूव, तदा तेन कुब्जेन निजहस्तास्तेषां तथा दर्शिता यथा ते सर्वेऽपि राजकुमारा दिशोदिशं पलायिताः, गगनमार्गात्तदैव देवैस्तस्य कुब्जस्योपरि कुसुमवृष्टिः कृता, तत्सकलं स्वरूपं वज्रसेननृपेण दृष्टं, ततः स कुब्जपार्श्वे समागतोऽवदच्च हे कलावन् यथा संग्रामे त्वया पराक्रमं दर्शितं, तथा तव स्वरूपमपि दर्शय? तत् श्रुत्वा कुब्जेनापि निजस्वाजाविकं रूपं प्रकटीकृतं, तद् दृष्ट्वात्यंतं प्रमुदितो राजा तयोर्विवाहं चकार. ततस्तेन हृष्टेन राज्ञा श्रीपालकुमाराय निवासार्थं धनधान्यादिसंपूर्णं गृहं दत्तं, सोऽपि तत्र तया कामिन्या सह विषयसुखं भुंजानः स्थितः.

अथान्यदा कोऽपि चरः सजायां श्रीपालस्य मिलितोऽवादीच्च हे नाथ दलपत्तननामनगरे धरापालनामा राजास्ति, तस्य च चतुरशीतिराज्ञीनां वृंदं वर्त्तते, तन्मध्ये प्रथमा गुणमालाजिधाना

राज्यस्ति. तस्या हिरण्यगर्भ १ रत्नगर्भ २ जगच्चंद्र ३ शिवचंद्र ४ कीर्त्तिचंद्राभिधानाः पंच पुत्राः संति, तेषामुपरि चैका शृंगारसुंदरीनामपुत्री वर्त्तते, तस्याश्च पंडिता १ विचक्षणा २ प्रगुणा ३ निपुणा ४ दक्षा ५ भिधानाः पंच सख्यः संति. सर्वा अपि ता जिनमतनिपुणाः समावस्था गुणसुंदरीपार्श्वे स्थिता जिनपूजादिकार्यं कुर्वंति. अथ तया राजकन्यया सखीभिः सहैवं प्रतिज्ञा कृतास्ति यदस्माभिः समस्ताभिरेक एव वरः कार्यः, स च जिनधर्मे रक्तः कपटादिरहितो युज्यते. सर्वाभिरपि तदेव प्रतिपन्नमस्ति, पुनस्ताभिरेवमपि प्रतिज्ञा कृतास्ति यदस्माभिः पंच समस्याः कार्यास्ताः संपूर्णीकृत्यास्माकं हृदयस्थितं भावं यः कथयिष्यति, स एवास्माभिर्वरः कार्योऽन्यो न, एवंविधा वार्त्ता सर्वत्र प्रसरितास्ति, नानादेशोद्भवाः पंडितास्तत्र मिलिताः संति, तेभ्यस्ताः समस्याः कथिताः, परं नृपकन्यादीनां मनःप्रमोदप्रदाः समस्यास्तैरपि न संपूर्णीक्रियंते. विविधदेशीयराजपुत्रा अपि तत्रागत्य शास्त्राभ्यासं कुर्वंति, परं तासां चित्तरंजनभावोऽद्यापि केनापि कथितो नास्ति. भो कुमार एवंविधं तत्र मयाश्चर्यं दृष्टमस्ति. तत् श्रुत्वा हृष्टः कुमारो गृहे समागतः, ततोऽसौ निजहृदये तत्र गमनं वांछितवान. हारप्रभावेण गगनमार्गेण स तूर्णमेव शृंगारसुंदर्या गृहे समागतस्तस्या अंगणे

च सिंहासने स्थितः, पंचसखीभिः सह राजकन्या श्रीपालस्य रूपं दृष्ट्वा जहर्ष, चिंतयामास च चेद्ययं नः समस्याः पूरयिष्यति तदा वयं धन्याः कृतपुण्या भविष्यामः, ततः कुमारेणोक्तं भो राजकन्ये तव समस्यापदं कथय? तत् श्रुत्वा राजकुमारीप्रेरिता पंडिताभिधाना सखी प्राह—'वांछाफलं चित्तगतं भवेच्च' इति समस्यापदं श्रुत्वा कुमरो हृदि चिंतयामास, अनया राजकन्यया सखीमुखेन समस्या प्रकाशिता, ततोऽहमपि परमुखेनैव तत्समस्यां पूरयिष्यामीति ध्यात्वा पार्श्वस्थस्तंभस्थपुत्तलकशीर्षे स निजहस्तं दत्तवान्. तदा पुत्तलकः प्राह—ये सिद्धचक्रं परमं पवित्रं। ध्यायंति नित्यं निजमानसे हि॥ तेषां नराणां च तथा च स्त्रीणां। वांछाफलं चित्तगतं भवेच्च॥ १॥ ततो विचक्षणा प्राह—'अन्यच्च लोकेऽत्र विलापतुल्यं' तत श्रुत्वा पुनः स पुत्तलकोऽवादीत—देवो जिनेशश्च गुरुर्यथार्थ-वक्ता हि धर्मेषु दयाप्रधानः॥ मंत्रेषु सारः परमेष्टिमंत्रः। अन्यच्च लोकेऽत्र विलापतुल्यं॥ १॥ ततः प्रगुणा प्राह—'यावद्विधात्रा लिखितं ललाटे' पुत्तलकः प्राह—हे चित्त खेदं परिमुंच नित्यं। चिंतासमूहे न कुरुष्व जीवं॥ फलं भवेदत्र परत्र ताव-द्यावद्विधात्रा लिखितं ललाटे॥ ४॥ ततः दक्षा पठतिस्म—'तस्यैव दासाश्च त्रिलोकलोकाः' पुत्तलकः

प्राह—यत्संचितं पूर्वभवे भवेच्च । तेनैव पुण्येन भवंति कामाः ॥ भोगाश्च राज्यानि शिवेष्टसौख्यं । तस्यैव दासाश्च त्रिलोकलोकाः ॥ ५ ॥ अथ सखीभिः सह शृंगारसुंदरी तत्समस्यापूरणादि महदाश्चर्यं विलोक्य निजमनोगतभावं च परिपूर्णं विज्ञाय कुमारस्य कंठे वरमालामक्षिपत्. राजापि पुत्तलकमुखसमस्यापूरणादि ज्ञात्वात्यंतं जहर्ष. ततस्तेन सकलां विवाहसामग्रीं विधाय सखीभिः सह शृंगारसुंदर्याः कुमारेण सार्द्धं पाणिग्रहणं कारितं.

अथान्येद्युः कोऽपि भट्टः कुमारस्य महिमानं दृष्ट्वोच्चैः स्वरेण कुमारंप्रति जगाद, भो भो कुमार मद्वचनं शृणु? कोल्लागाख्यपुरे पुरंदरनामा राजास्ति. तस्य विजयाभिधाना राज्ञी वर्त्तते, तस्याः कुक्षिसंभवा हरिविक्रम १ नरविक्रम २ हरिसेनादयः सप्त पुत्राः संति. तेषामुपर्येका पुत्री जयसुंदर्यभिधानास्ति. सा कन्या पाठकपार्श्वान्नानाकला अपाठीत्. तदा राजा तथाविधसकलकलाकलितां स्वकीयां कन्यां विलोक्य तस्या वरार्थं चिंतां कृतवान्. तदा तस्याः पाठकेन कन्याया अभिप्रायं ज्ञात्वा राज्ञे निवेदितं, भो राजन्! युष्माकं पुत्र्या मनस्येवमभिप्रायोऽस्ति यः कोऽपि राधावेधं साधयिष्यति तस्यैव पुरुषस्याहं पाणिग्रहणं करिष्यामि, अन्यथाहं कुमार्येव स्थास्यामि. एवं पा-

ठकोक्तं स्वांगजामनोगताभिप्रायं विज्ञाय राजा तत्कालमेव राधावेधसामग्रीमकरोत्. तत्र मंडपे चैको महास्तंभ ऊर्ध्वीकृतोऽस्ति. तस्य स्तंभस्य मध्यभागे उपर्युपर्यष्टारविवरोपेतानि चक्राणि संति, तानि चक्राणि क्रमेण वामवामेतरपार्श्वतो यंत्रयोगेन भ्रमंति. तेषामुपरिभागे स्तंभस्यांते राधाभिधानैका काष्ठपुत्तलिकापि यंत्रयोगेन भ्रमति. अथ तस्य स्तंभस्याधोभागे चैका तैलभृता कटाहा स्थापितास्ति. तस्यां प्रतिबिंबितां राधां न्यग्मुखेन लक्ष्यीकृत्य भ्रमतां चक्राणां मध्यात् तस्या वामलोचनस्य वेध ऊर्ध्वीकृतशरविमोचनेन विधातव्यः. एवंविधो राधावेधोऽद्यापि केनापि पुरुषेण कृतो नास्ति, किंच तत्र बहवो राजानो मिलिताः संति, परंतु कोऽपि तत्कार्यं कर्त्तुं समर्थो नो भवति. इति तस्य भटस्य मुखात् श्रुत्वा तस्मै च कुंडलं च दत्वा कुमारो गृहं प्रत्याजगाम, प्रत्यूषे गगनमार्गेण स राधावेधस्थाने संप्राप्तस्तत्र च बहवो लोका मिलितास्तदा तेन तत्र हारप्रभावेण राधावेधः साधितस्तदा जयसुंदर्यपि संप्राप्तहर्षा कुमारस्य कंठे वरमालां चिक्षेप. प्रमुदितेन राज्ञा ततस्तयोर्विवाहः कृतः, धनधान्यादिपूर्णं गृहं च तस्मै निवासाय दत्तं. तत्र तया सह विषयसुखमुपभुंजानः स तिष्ठति.

इतस्तस्य मातुलनृपपुरुषास्तस्यानयनार्थं तत्र समागताः, कुमारेणापि स्वजायानयनार्थं नट्टाः प्रेषितास्तेऽपि निजनिजबंधुसहितान्निस्तान्निः स्त्रीभिः समं ड्रुतं तत्र समागताः, गजाश्वरथसुन्नटसंकुलिता महती सेना तत्र संमिलिता. अथ तया महत्या सेनया युतः कुमारः प्रतिष्ठानपुरंप्रति चचाल, अविच्छिन्नप्रयाणैश्च स ड्रुतं तत्र संप्राप्तः, मातुलनृपोऽपि नानानूपालवृंदैः परिकलितं श्रीपालं राज्ये स्थापयामास. ततो वरहारकिरीटकुंमलान्नरणयुक्तश्छत्रचामरादिराजचिह्नैश्च विराजमानः श्रीपालनरेंड्रः सिंहासने विरराज. तदा सोऽनेकनृपाणां प्राभृतानि तत्र स्वीचकार. अथागणितसेनावृंदैः सहितः श्रीपाल उज्जयिनीनगरीं प्रति स्वजननीमिलनार्थं चचाल. मार्गे सोपारकनगरे स स्वसैन्येन सहोत्ततार. तत्र तत्सोपारकनगरराजानं सेवार्थमनागतं दृष्ट्वा श्रीपालनरेंड्रस्तत्कारणं स्वमंत्रिणः पप्रछ. तदैव तन्नगरराज्ञः प्रधानस्तत्र समागत्य श्रीपालं च नत्वा राज्ञोऽनागमनकारणं कथयामास. हे नाथ अत्र महसेननामा राजास्ति. तस्य ताराभिधाना पट्टराज्ञी वर्त्तते. तत्कुक्षिसंभवैका तिलकसुंदरीत्यभिधाना पुत्री वर्त्तते. साद्य डुष्टसर्पेण दष्टा, अतः सा मृता, तस्या दहनक्रियार्थं राजा स्मशाने गछति, अहं च नवत्पार्श्वे समागतः, तत् श्रुत्वा दयादानैकनिधिः श्रीपालनरें-

रु उवाच हे मंत्रिन् सा कन्या कुत्रास्ति? तेनोक्तं स्मशाने भविष्यति. तदैव परोपकारैकदक्षः श्रीपालस्तूर्णमश्वरत्नं समारुह्य तत्र स्मशाने गतस्तत्र राजादिसर्वलोका मिलिताः संति, श्रीपालेनोक्तं तां कन्यां मम दर्शयत? तदा महासेनेनोक्तं हे राजेंद्र मृतकस्य किं दर्शनेन प्रयोजनं? तेनोक्तं हे राजन् सर्पदंशेन बहवः प्राणिनः प्रायेण मृत्युसदृशां मूर्छां प्राप्नुवंति, तेन शीघ्रं तां मम दर्शयत? तत् श्रुत्वा ते तां बंधनरहितां कृत्वा श्रीपालाय दर्शयामासुः. तदा तेन तस्याः कंठे स हारः स्थापितो महामंत्रपूतेन वारिणा च सा सिक्ता, तत्कालं सा सज्जीभूय चोत्थिता. ततस्तयोक्तं हे तात अत्र जनसमूहः किमर्थं मिलितोऽस्ति? तत् श्रुत्वा तस्यास्तातेन सर्वं वृत्तांतं कथयित्वोक्तं, हे पुत्रि! अस्य महाराजस्य प्रसादेन त्वं जीविता जातासि, ततो महसेनराज्ञा श्रीपालो विज्ञप्तः, हे नृपेंद्र! मया तुभ्यमेषा मे पुत्री दत्ता, श्रीपालेनापि तत्प्रतिपन्नत्वाद् नृपालोऽपि महोत्सवेन तयोर्विवाहं चकार. ततस्तेन महसेननृपेण श्रीपालाय प्रभूतं धनं दत्तं, सैन्ययुतोऽसौ महसेननृपोऽपि श्रीपालेन सार्द्धं चचाल. अथात्र तेन श्रीपालेन सार्द्धं तस्याष्टौ राज्ञ्यः पंच च सख्यः संति. ताभिः सह विषयसुखमुपभुंजानः स निजजननीनमनार्थं गच्छति. मार्गे चासौ भूरिगजाश्वरथसुभटमणिरत्न-

कंचनादिप्रशस्तवस्तुग्रहणं कुर्वन् स्थाने स्थाने वहुसेनां मेलयन् गांधारह्लारमरहट्टसोरठलाटधाटमे-
दपाटादिदेशेषु स्वजयं कुर्वन्ननुक्रमेण स मालवदेशे संप्राप्तः, तदा मालवेशश्चरमुखादरिसेनामायां-
तीं श्रुत्वा भीतः सन् स्वदुर्गं सज्जीचकार, तत्र दुर्गे च तृणधान्यकाष्टजलवस्त्रधनादिसंचयं चाकरो-
त्. यंत्रनालिकादिशस्त्रांश्च सज्जीचकार. तदा श्रेष्टिसार्थपतिप्रभृतिप्रजालोका व्याकुला अभवन्. अ-
थ श्रीपालसैन्येन सा नगरी लंका सागरेणेव परिवेष्टिता. ततः श्रीपालो रात्रिप्रथमयामे जननी-
मिलनार्थं हारप्रभावेण जननीगृहद्वारे प्राप्तस्तत्र स्थितश्च स मातुः प्रवृत्तिं श्रुतवान्. श्रीपालस्य मा-
ता मदनसुंदरींप्रति वदति, हे वत्से! परचक्रेणाद्य समंतान्नगरी वेष्टितास्ति, लोकाश्चलाचलं कुर्वंति,
अतोऽत्र किं किं भविष्यति? मम पुत्रस्तु परदेशे गतोऽस्ति, तस्याधुना संवत्सरैको जातस्तस्य सं-
देशपत्रमपि नायाति, अथावयोरस्मिन्नवसरे का गतिर्भविष्यति? तत् श्रुत्वा मदनसुंदरी प्राह हे
मातर्नवपदध्यानेनावयोः कस्यापि भयो न भविष्यति, अतो यूयं खेदं मा कुरुध्वं? किंचाद्य सायं-
कालेऽहं स्वगृहस्थजिनमूर्त्तेरारात्रिकमकुर्वं तदा मया जिनमूर्त्तेरपूर्वं स्वरूपं दृष्टमस्ति, तद् दृष्ट्वा मम
मनसि महानंदः समुत्पन्नस्तेनानंदेनाद्यावधि मम शरीरं रोमांचितं वर्त्तते. पुनरद्य मम वामन-

यनं वामपयोधरं च स्फुरतस्तेन ज्ञायतेऽधुना सद्य एव तव पुत्रः समागमिष्यति. इति श्रुत्वा कमला प्राह हे वत्से! ते रसनायां सदैवामृतं वर्त्तते. अथ गृहद्वारस्थितः श्रीपालस्तयोरेवंविधं वार्त्तालापं श्रुत्वा मातुश्चिंतावचनं प्रियायाश्च दृढवचनं विज्ञाय स्वभार्याया वचनं सत्यीकरणार्थं प्राह, हे मातर्द्वारमुद्घाटय? तत् श्रुत्वा कमला मदनसुंदरींप्रति प्राह हे वत्से! निश्चितमिदं मम पुत्रस्य वचनं, मदनसुंदरी प्राह किं जिनदर्शनं कदापि मिथ्या भवेत्? अपितु नैव भवेत. तदा मदनसुंदर्योत्थाय शीघ्रमेव तत्कपाटद्वयमुद्घाटितं. तदा श्रीपालो निजजननीं ननाम. ततः स मातरं च स्वस्कंधे समारोप्य हस्ते च मदनसुंदरीं गृहीत्वा गगनमार्गेण शीघ्रं निजस्थाने समाजगाम. तत्र भद्रासने निजजननीं संस्थाप्य तस्या अग्रे च नानाभरणवस्त्ररत्नसंचयं मुक्त्वैवमुवाच हे मातस्तव प्रसादेनेमाः सर्वा विभूतयः सकलसेनाश्च बभूवुस्तदा पंच सखीभिः सहाष्टौ वध्वः श्वश्रूचरणयोः पेतुः, तदा कमलाप्यत्यंतं जहर्ष, पुनस्ताः सर्वा वध्वो मदनसुंदरीमपि नेमुः, ततो विद्याधरपुत्र्या कमलाया अग्रे पूर्वानुभूतं कुमारस्य सकलमपि चरितं कथितं ततोऽनंतरं कमलया स्वहस्तेनैवैतासां पृथक्पृथगेकैकं नाटकं विविधाभूषणानि च दत्तानि. तदा श्रीपालेन मदनसुंदरी पृष्टा, हे प्रिये तव

पितरं केन प्रकारेणात्राकारयामि? तत् श्रुत्वा मदनसुंदरी प्राह-हे स्वामिन् मम पिता स्कंधे कुठारं मुखे च तृणं गृहीत्वात्र समेतु, येनाद्यप्रभृति कोऽपि जिनशासनस्यासातनां न कुर्यात्. अथ श्रीपालो रात्रौ सुखेन सुष्वाप.

अथ प्रभाते श्रीपालो दूतं समाहूय प्रोवाच भो दूत त्वं प्रजापालनृपपार्श्वे गच्छ? तत्र गत्वा च त्वयैवं तस्मै वक्तव्यं; भो राजंस्त्वया स्कंधे कुठारं मुखे च तृणं धृत्वा श्रीपालनरेंद्रपार्श्वे समागंतव्यं, अन्यथा संग्रामः कार्यः. दूतेनापि तत्र गत्वा तथैवोक्तं, तत् श्रुत्वा प्रजापालराज्ञा निजमनसि विचारितं, वृथैव प्रजासंहारो न कर्त्तव्यः, एवं विचार्य तेन दूतंप्रति प्रोक्तं, भो दूत! त्वं व्रज? त्वयोक्तमेव कार्यं करिष्यामि. ततो मंत्र्यमात्यादिसहितः प्रजापालराजा स्कंधे कुठारं मुखे च तृणं गृहीत्वा कृपिवलवेषभृत श्रीपालनरेंद्रद्वारे समागतस्तदा श्रीपालेन तस्य तद्वेषं दूरं कारयित्वा नवीनवस्त्रालंकारादि परिधाप्य स्वसमीपे स्थापितस्ततस्तस्मै तेन बहुमानं च दत्तं. ततोऽवसरं प्राप्य मदनसुंदरी निजतातं प्रत्युवाच हे तात! मम कर्मणा लब्धं वरं त्वं पश्य? येन तव स्कंधात्कुठारो दूरे कारितस्तत् श्रुत्वा लज्जितेन राज्ञा कर्मणां सत्यं स्वरूपं स्वीकृतं. एवं श्रीपालस्वरूपं ज्ञात्वा राजा

तत्रैव स्थितः, उज्जयिन्यामपि तदा शांतिर्जाता, ततः परिवारयुता सौभाग्यसुंदरीरूपसुंदरी च तत्र समाजग्मतुः, एवंविधं सकलं सज्जनमेलापकं दृष्ट्वा श्रीपालेन हर्षविनोदार्थं नृत्यकरणाय नर्त्तक्यः समादिष्टाः, सर्वा अपि नर्त्तक्यः सज्जीभूताः, परमेका मूलनटी भूयोभूयः कथ्यमानापि नोत्तिष्टति. तया विना च नृत्ये रसो न प्रादुर्भवति, तदा ताभिर्महाकष्टेन सा मूलनटी रंगमंडपे समानीता, ततो दुःखदग्धा सा नटी लोकभाषयैवमवादीत्—किहां मालव किहां शंखपुर । किहां बब्बर किहां नट्ट ॥ सुरसुंदरी नचावीयें । वळी दैवशिर दट्ट ॥ १ ॥ तत श्रुत्वा सुरसुंदरीमाता तस्याः समीपे समागता, तदा सापि निजमातुः कंठे विलग्ना. रुदती माता सुरसुंदरींप्रति प्रोवाच हे पुत्रि! किमिदं जातं? सर्वां कथां कथय? तदा सुरसुंदरी सर्वसमक्षं निजवृत्तांतं कथयामास—हे मातर्वयं महाडंबरेण शंखपुरीपरिसरे प्राप्ताः, सार्थलोकाश्च सर्वे नगरमध्ये गताः, शुभमुहूर्त्तार्थं मम स्वामिना सहाहमुद्याने स्थिता, रात्रौ नः समीपे सुभटवृंदं स्तोकं ज्ञात्वा चौराणां धाटी तत्र समागता. तां धाटीं विलोक्य तव जामाता पलायितः. तदा तैर्लक्ष्म्या सहाहं गृहिता, नेपालदेशे च मौल्येन विक्रीता. तत्राहं सार्थपतिना गृहिता, तेन च बब्बरकुले वेश्यायै विक्रीता, सा च मां नृत्यादिवे-

श्याकलामशिक्षयत्. एवमहं गीतनृत्यादिकलायां निपुणा जाता. तत्र महाकालनृपस्य नृत्ये महती प्रीतिरासीत्. तस्याग्रेऽशीतिनर्त्तक्यः संमिलिता अभवन्. मां च नृत्यादिकलायां विशेषनिपुणां ज्ञात्वा तेन निजप्रियनाटके स्थापिता. तत्र नानाकृत्यकरणेन मया बब्बरराजा रंजितः. इतस्तत्र मदनसुंदरीस्वामी श्रीपालस्तत्र समागतस्तदा बब्बराधीशमहाकालराजा तस्मै निजपुत्रीं दत्तवान्. तया सार्द्धं राज्ञा नव नर्त्तकवृंदानि श्रीपालाय प्रदत्तानि. तन्मध्यस्थिताहमपि तस्याग्रे विविधं नृत्यमकुर्वे. अथाहमत्र सर्वं निजकुटुंबं दृष्ट्वा दुःखं प्राप्ता. एवं निजस्वरूपं निवेद्य सा पुनरवादीत् हे तात! अहं कुशीला मंदभाग्या च, त्वया तु मे विवाहो महाविभूत्या कृतोऽभूत्, परंतु मम भाग्येनेदृश्येवावस्था ममाभवत, ततः कस्य दोषो दीयते? उक्तं च—भाग्यं फलति सर्वत्र । न च विद्या न पौरुषं ॥ समुद्रमथनाल्लेभे । हरिर्लक्ष्मीं हरो विषं ॥ १ ॥ मम भगिनी मदनसुंदरी धन्या शीलवती, तस्या धर्मोऽपि फलित इत्यादि सुरसुंदरीस्वरूपं ज्ञात्वा श्रीपालेन दूतं प्रेष्य निजसेनायामरिदमनकुमारं च संशोध्य समानायितस्तस्मै च सुरसुंदरी प्रदत्ता. पुनस्तस्मै च धननगरादि प्रदत्तं, ततस्तयोरपि शुभसंगेन सम्यक्त्वं समुद्भूतं, श्रीसिद्धचक्रस्य महिमा च सर्वत्र जातः, ततः श्रीपाल-

राजा तेषां सप्तशतनराणां राणाख्यपदवीं दत्वा नराणां नाथं च कृत्वा तान् स्वपार्श्वे स्थापयामास. ततोऽसौ निजमतिसागरं सचिवं समाहूय पूर्ववत्तस्मै निजामात्यपदवीं च दत्वा सर्वं राजकार्यं समर्पयामास. श्वशुरान् शालकांश्चान्यनृपान् सुभटानपि च स बहुमानं ददौ. तेऽपि सर्वे श्रीपालनृपालचरणकमले सेवयामासुः.

अथान्यदिने मतिसागरमंत्रिणा नृपो विज्ञप्तः, हे नाथ दुष्टेनाजितसेनेन तव बाल्यावस्थायां ते पितृराज्यं गृहीतमस्ति, त्वमपि राज्यादुद्वापितोऽसि. अतस्तं विजित्य त्वं स्वपितृराज्यं गृहाण? तदैव ते जन्मापि सफलं भविष्यति, अन्यथा न, किंच योऽयं तवर्द्धिविस्तारोऽस्ति सोऽपि तदैव सफलो भवेत्. अपि चायं महाशत्रुरजितसेनस्त्वया यावन्न साधितस्तावत्तु त्वया किमपि न कृतं. इति मतिसागरवचनानि श्रुत्वा श्रीपालः प्राह हे मंत्रीश्वर! त्वया यदुक्तं तत्सर्वं सत्यमेव, परंतु सामदानभेददंडै राज्यकार्यं करणीयं, तेन पूर्वं तु तत्र दूतः प्रेष्यः, तत श्रुत्वामात्येनोक्तं हे स्वामिंस्तत् सत्यं. ततोऽसौ चतुर्मुखनामानं दूतं चंपायां मुमोच. सोऽपि तत्र गत्वाजितसेननृपंप्रत्येवमकथयत्—भो अजितसेननृप श्रीपालः पूर्वं तु बालोऽभूत्, भूभारधरणे चासमर्थस्तेन त्वया राज्यं गृही-

तं, ततोऽद्यापि किमपि न गतं, तस्य राज्यं त्वया देयं येन निजकुले शांतिः स्यात्, अन्यथा ते कुलस्य नाशो भविष्यति. किं च श्रीपालस्य तव चांतरं नास्ति. पुनस्तस्य पार्श्वे महती सेनास्ति, ततः संग्रामं कृत्वापि स ते राज्यं ग्रहिष्यति. अथ च स श्रीपालो राजाधिराजोऽस्ति, सर्वे नृपास्तस्य सेवार्थं समागताः संति, तस्य च बलमप्यतुलमस्ति. तेन त्वमपि तस्य सेवार्थमागछ? इति दूतोक्तिं समाकर्ण्य क्रोधेन ज्वलितः सन्नजितसेननृप एवं प्राह—भो दूत! त्वं त्ववध्योऽसि, तेन त्वामहं जीवंतं मुंचामि, किं च भो चतुर्मुख! तव स्वामी मम शत्रुरस्ति, तस्योपरि दयां कृत्वा मया तु स बाल्ये जीवन् मुक्तः, अथ सुप्तसिंहमिव मां स जागरयति, ततो मम सैन्येन स ते स्वामी भस्मीभविष्यति. एवंविधान्यजितसेनोक्तवाक्यानि श्रुत्वा पुनः दूतः प्राह—भो अजितसेन! त्वं तु खद्योततुल्यः, स तु सूर्यसदृशोऽस्ति, ततो निःकारणं प्रजायाः संहारकरणेन तवानिष्टमेव भविष्यति. तत् श्रुत्वा क्रोधाध्मातोऽजितसेनस्तं दूतं निर्भर्त्स्य निष्कासितवान्, प्रोवाच च भो दूत त्वं शीघ्रं गछ? तव स्वामिनं च संग्रामाय प्रेषय? अहमपि तूर्णं रणभूमावागत्य ते स्वामिना सार्द्धं संग्रामं करिष्यामि. इति श्रुत्वा स दूतस्तूर्णं श्रीपालनरेंद्रपार्श्वे समायातः, सर्वोऽप्युदंतश्च श्रीपालाय

निवेदितः, तदा श्रीपालनरेशोऽपि निजां महतीं सेनां प्रगुणीकृत्याऽविच्छिन्नप्रयाणैश्चंपायाः परिसरे स्थितिं चकार. अजितसेनोऽपि श्रीपालं समागतं विज्ञाय स्वकीयां प्रबलां सेनां गृहीत्वाऽविच्छिन्नप्रयाणैस्तत्र रणभूमौ समागतः. अथ प्रथमं तत्र रणभूमिः शोधिता, द्वयोर्दलयोर्जयस्तंभौ च समारोपितौ. सुभटैः शस्त्रपूजा कृता, भट्टाश्च बिरुदावलिं प्रोचुः, सुभटा रक्तचंदनैरंगविलेपनं चक्रुः, अश्वा हेषारवान् कुर्वंति, गजा गर्जितशब्दान् विदधति, रथाश्च चित्कारशब्दान् कुर्वंति, रणतूरीभेरिमुरजादिविविधवादित्राणि वाद्यंते. एवं तत्र महाकोलाहलो बभूव, केचित् सुभटा निजजयकृते याचकेभ्यो विविधं दानं ददुः, वीराश्च वीरवलयानि दध्रिरे, तस्मिन्नवसरे काचित्सुभटजननी निजपुत्रंप्रति वक्ति, हे पुत्र! रणांगणे त्वया शौर्यमेव दर्श्यं, मम कुक्षिं न लज्जयेः, निजस्वामिकार्यार्थं वैरिणां खंग्मं खंग्मं कृत्वैव त्वया समागंतव्यं. काचिन्माता पुनः पुत्रंप्रत्येवं वक्ति, हे पुत्र! अहमपि यथा वीरसुता, वीरभार्या वीरपुत्रा च भवेयं तथैव त्वया रणांगणे प्रवृत्तिः कार्या. काचिद्वीरपत्नी समरोत्सुकं स्वभर्त्तारंप्रति वदति हे स्वामिंस्त्वया रणांगणेऽहं न स्मर्त्तव्या, अन्या हास्येन काचित्कथयति हे नाथ मम कटाक्षबाणाग्रे यदि त्वं धैर्यं धर्त्तुं समर्थो न भवसि, तदा त्वमनेकशरनिकरनि-

पातभीषणे रणांगणे कथं धैर्यं धारयिष्यसि ? इति विविधवचनप्रहारैर्द्विगुणोत्साहा वीरमानिनः सु-
भटाः सन्नाहपरिधानपुरस्सरं विविधशस्त्रयुता रणभूमौ समाजग्मुः, अथ द्वयोरपि सैन्ययोः सुभटा
निजनिजस्वामिनामोच्चारणपूर्वकं संमिलिताः, ततस्ते खड्गैर्बाणैःकुंतैर्दंडैर्भल्लैश्च महाघोरं युद्धं च-
क्रुस्तत्र केषांचित्सुभटानां शिरांसि कपित्थफलानीव भूमौ पेतुः, कस्यचित्सुभटस्य खड्गाहतं शीर्षं ग-
गने प्रोच्छल्य सूर्यस्यापि समागतराहुशंकां विदधे. केषांचित्सुभटानां कबंधाः शौर्यरसाकुला नृत्यंत
इव दृश्यंते. केचित्कातराः सुभटा नश्यंति, तदाश्वखुरोध्धूतरजोभिः पिहितेंतरिक्षे सूर्यमंडलमप्यदृ-
श्यं बभूव. स्थाने स्थाने गजाश्वरथपदातयः पतंति, एवं भीषणे संग्रामे जायमाने भूमौ रुधिरप्रवा-
हाश्चलिताः, तेषु सुभटशीर्षाणि मत्स्या इव वहंतिस्म, तेषां नेत्राणि च तत्र कमलानीव विराजंते,
केशाश्च शैवलस्तबका इव तत्र शोभंते. रणभूमौ सर्वत्रासृक्कर्दमो बभूव, एवं तत्र महाकोलाहलयु-
ते संग्रामे जायमाने श्रीपालनृपसैनिकैरजितसेननृपसेना भग्ना, एवं निजसेनां भग्नां दृष्ट्वाऽत्यंतं क्रु-
धितोऽजितसेननृपः स्वयमेवाग्रभागे समागत्य भग्नां स्वकीयसेनां च प्रोत्साह्य श्रीपालसैन्यमत्यंतं
विलोडयामास, तेन वीरेण च श्रीपालसैन्येऽनेके नृपा मारिताः, एवं वायुवेगेनार्कतूलमिव विलो-

ध्यमानं निजसैन्यं दृष्ट्वा तैः सप्तशतराणकैः सहसागत्याजितसेनः परिवेष्टितः, तेषां सिंहनादैरेवा-
जितसेनसेना सकलापि दिशो दिशं पलायिता, अथ तैः सप्तशतराणकैरजितसेनंप्रति कथितं, हे
अजितसेन अद्यापि ते किमपि गतं नास्ति, त्वमप्यस्माभिः सहैव श्रीपालचरणयोः शरणं कुरु, त-
त श्रुत्वा रुष्टेनाजितसेनेन तैः सह महाघोरः संग्रामः प्रारब्धस्तदा तैस्तं गजात्पातयित्वा बंधनैश्च ब-
ध्ध्वा श्रीपालाग्रे समानीतः, तदा श्रीपालमहाराजस्तं तथावस्थं दृष्ट्वा शीघ्रं मुक्तबंधनं कृत्वेत्यवदत् हे
तात निजमनसि खेदं मा कुरु? सांप्रतं निजराज्यं त्वं सुखेन भुंक्ष्व? यद्यधिकमपि युज्यते तदपि
गृहाण? इति श्रुत्वाजितसेनेन निजमनसि चिंतितं मया तदा यद्दूतवचनं न मानितं तध्ध्रुवमयु-
क्तं कृतं, अहं वृद्धोऽपि परद्रोहपरायणो महापापिष्टश्चास्मि, अयं श्रीपालस्तु बालोऽपि परोपकारी ध-
र्मपरायणश्चास्ति. किंच गोत्रद्रोहेण कीर्त्तिर्नश्यति, राज्यद्रोहेण नीतिश्च गच्छति, बालद्रोहेण सुग-
तिश्च नो भवति, मया त्वेतत्त्रयमपि कृतमस्ति, अतो मे पापिनः का गतिर्भविष्यति? अथ त्वेते-
षां पापानां परिहारार्थं चारित्रग्रहणमेव मम श्रेयस्करं, एवं चिंतयतस्तस्य शुभभावनया पापं पला-
यितं, कर्मभिश्च तस्मै विवरं दत्तं, तदा तेन स्वयमेव तत्रैव चारित्रं गृहीतं, शासनदेवतया च तस्मै

लिंगं प्रदत्तं. तदा श्रीपालमहाराजस्तस्याजितसेनस्य चारित्रस्वरूपं दृष्ट्वाऽत्यंतं प्रमुदितः परिवारयुतो भावनया तस्मै नमनं कृत्वैवं तस्य स्तुतिं चकार. हे अजितसेनमुनीश्वर! त्वया क्षमारूपखड्गेन क्रोधरूपमहासुभटो हतः, त्वया मार्दववज्रेण मानगिरिश्चूर्णीकृतः, आर्जवकुठारेण त्वया मायावल्ल्युन्मूलिता, निःस्पृहतारूपपोतेन त्वया लोभमहासागरस्तरितः, तपःसंयमसत्यशौचाकिंचनब्रह्मादिदशविधः साधुधर्मस्त्वयांगीकृतोऽतो हे अजितसेनमहामुने तुभ्यं नमः, इत्यादि तस्य स्तुतिं कृत्वा तं च भावनया नत्वा तत्पुत्रं च तद्राज्ये स्थापयित्वा श्रीपालनरेंद्रश्चंपांप्रति प्रचचाल. महोत्सवपूर्वकं शुभमुहूर्त्ते च स चंपानगर्यां प्राविशत्. नागरिकैः सधवस्त्रीभिश्च धवलमंगलगीतगानपुरस्सरं सोऽत्यंतं सन्मानितः, वंदिजनैर्जयजयशब्दैर्वर्धापितश्च. ततोऽसौ स्वपितुरासने विरराज, तदा सकलनरेश्वैर्मिलित्वा हर्षपूर्वकं पुनस्तस्य राज्याभिषेकः कृतः, प्राभृतानि च तस्मै दत्वा ते नृपास्तं सुखेन सेवंतेस्म. तदा श्रीपालनरेंद्रेण मदनसुंदरी पट्टराज्ञीत्वेन स्थापिता, शेषाश्च लघुपट्टराज्ञ्यः स्थापिताः, ततोऽसौ त्रिभिर्धवलमित्रैः सहितस्य मतिसागरस्य महामात्यपदवीं ददौ. अथ तेन कोशांबीनगराद्विमलाभिधं धवलश्रेष्ठिपुत्रं समाहूय तस्मै च धवलस्य सर्वं धनं समर्प्य श्रेष्ठिपदवी दत्ता. अ-

न्येषां सर्वेषामपि यथायोग्यं सन्मानं कृत्वा स सुखेन तस्थौ. तदा तेन तत्र नव कनकमयानि जिनभुवनानि कारितानि, तेषां मध्ये च नव रत्नमय्यो जिनमूर्त्तयः स्थापितास्तत्र च परिवारयुतः श्रीपालनरेंद्रो नवपदध्यानं चकार. एवं तेन सर्वस्थानेषु जिनभुवनगुरुवंदननवपदमहिमा चक्रे. सर्वत्र सप्तव्यसनवर्जनममार्युद्घोषणं सुपात्रदानं शीलतपोभावनादिवृद्धिश्च कृता. तद्राज्ये लोकाः प्रायेण धनधान्यपुत्रपौत्रादिवृद्धिभावं प्राप्ताः, एवं स दीनेभ्यो दानं समर्पयन् देवेंद्र इव लीलां चकार.

अथैत उत्पन्नावधिज्ञानो राजर्षिरजितसेनो महामुनिर्विहरन् सन् तच्चंपापुर्युद्याने समाजगाम. वनपालकेन श्रीपालपृथ्वीपालाय वर्धापनिका दत्ता, तदा श्रीपालोऽपि तस्मै वनपालाय प्रीतिदानं दत्वा जननीजायासमेतो महर्द्धिविस्तरेण मुनींद्रेण पवित्रीभूते उद्याने समाजगाम, तत्र मनोवाकायत्रिकरणशुद्ध्या तं महामुनिं त्रिःप्रदक्षिणीकृत्य श्रीपालभूपाल उचितस्थाने समुपाविशत, तदा मुनिनापि धर्मदेशना प्रारब्धा. भो भव्या इह संसारे मनुष्यजन्म दुर्लभं, तत्रापि जिनागमश्रवणं दुर्लभं, तत्राथ श्रद्धा दुर्लभा, तत्र च संयमपालनं दुष्करं, एतच्चतुष्टयं तु केवलं पूर्वकृतपुण्येनैव प्राप्यते, अथ धर्मो द्विविधोऽस्ति, एकः साधुधर्मो द्वितीयः श्रावकधर्मश्च, तत्र साधुधर्मस्य दशभेदाः

संति,. श्रावकधर्मस्य च द्वादश भेदाः संति. तत्रापि सर्वधर्मकार्येषु नवपदध्यानं तु सारभूतमेव वर्त्तते, अत्रास्य नवपदस्य वर्णनं कर्त्तव्यं. इत्यादिधर्मकथां कथयित्वा सोऽजितसेनमहामुनिर्विरराम. तदा श्रीपालो विनयं कृत्वा प्राह—हे मुनीश केन कर्मणा मम बाल्यत्वे दुष्टकुष्टोत्पत्तिर्जाता? केन सुकर्मणा च तस्य रोगस्य समाधिर्जाता? केन शुभकर्मणा च स्थाने स्थानेऽहमीदृशीं समृद्धिं प्राप्तवान्? पुनर्हे नाथ केन कर्मणाहं सागरे पतितस्तथा केन नीचकर्मणा मम मातंगत्वं संप्राप्तं? हे मुनीश इदं सर्वं मम कर्मस्वरूपं मह्यं कृपां विधाय त्वं कथय? तत् श्रुत्वा मुनिराह हे नरवर! इह संसारे जीवानां पूर्वकृतकर्मवशात्सर्वसुखदुःखानि भवंति.

इहैव भरतक्षेत्रे हिरण्यपुरनामनगरे श्रीकांतनामा राजा पापिष्टो मृगयाव्यसनाभिभूतोऽभूत्, तस्य श्रीमतीनामराज्ञी जिनधर्मे निपुणा विशुद्धशीलालंकारा कृपाप्रशमसंवेगास्तिक्यादिगुणोपेता स्वपतिभक्ता च बभूव, सा राज्ञी मृगयारक्तं स्वपतिं सर्वदोपदेशं ददाति हे स्वामिन् नरकनिबंधनं महादुःखप्रदं जीववधव्यसनं युष्माभिर्न कर्त्तव्यं, तुरगारूढा यूयं तीक्ष्णशस्त्रैस्तृणजलभक्षकाणां जीवानां शरीराणि छेदयित्वा तेषां च खेदं दत्वा यद्दर्पं कुरुथ, सोऽयं क्षत्रियाणामाचारो नास्ति. किंतु

वनवासिमृगशंवरशूकरशशकप्रभृतिपशुजातीनां पक्षिजातीनां च रक्षणकरणमेव श्रेयस्करं क्षत्रियाणां वर्त्तते. परप्राणहरणरूपं कार्यं तु चांडालानामेव युज्यते. ये जनाः परप्राणैरात्मानं पुष्टं कुर्वंति ते स्वल्पैरेव दिनैः स्वात्मानं नाशयंति. इत्युपदेशं राज्ञी सर्वदा नृपंप्रति ददौ, एवं तयोक्तो नृपस्तदग्रे कथयति यदहं जीवान् न हनिष्यामि, परं बहिः समागत्य तथैव स जीवान् मारयति. अथान्यदिने स राजा उद्भटैः सप्तशतपुरुषैः सह जीववधार्थं वने गतस्तत्र च धर्मध्वजधारकमेकं मुनिं दृष्ट्वा तेन राज्ञोक्तं भोः सुभटा एष मक्षिकाउड्डायनार्थं चामरधारी कोऽपि कुष्टी भविष्यति, तत् श्रुत्वा सर्वैः सुभटैरपि तथैव भणितं हे राजन् ! एष कुष्ट्येव वर्त्तते. तदा तैरुद्भटपुरुषैर्यष्टिभिर्यथा यथा स क्षमावान् मुनिस्ताड्यते तथा तथा स राजा समुल्लसन् सन् हास्यरसमनुभवतिस्म. एवं ते सर्वे मुनेरुपसर्गं कृत्वा मृगवर्गपृष्टे धाविताः, धावमानास्ते सर्वे स्वनगरे प्राप्ताः, एवं स रात्रौ स्वप्रियाग्रे दिनस्य स्वरूपं कथयति, परं सा तं निवारयति, एवं तस्या अग्रे तु स वदति यदद्यप्रभृत्यहं जीववधं न करिष्यामि, परं बहिर्गत्वा तैरुद्भटपुरुषैः सह स राजा जीवान्मारयति. अथान्यदा स राजा निजसेनां पृष्टे त्यक्त्वैकाक्येव मृगयार्थं गच्छन् मृगपृष्टे धावितः, इतो नदीतटे सघनवृक्षसमूहे स

मृगोऽदृश्यीभूव, तं मृगं शोधयन् स नृपो नद्या उपकंठे ध्यानस्थमेकं मुनिं ददर्श. तदा तेन पापिष्ठेन नृपेण हस्ताभ्यां तं मुनिं गृहीत्वा कौतुकार्थं नदीजले स निक्षिप्तस्तदा जले पतितस्य मुनेस्तं दुःखत्वं विज्ञायोत्पन्नकिंचित्करुणारसो जलात्पुनस्तं मुनिं निष्कास्य भावेन भूमौ मुमोच. ततो गृहमागत्य स स्वप्रियाग्रे तं मुनिवृत्तांतं निवेदयामास. तयोक्तं हे नाथ! कस्यापि जीवस्य दुःखदानं न श्रेयस्करं, मुनिराजस्य दुःखोत्पादनं तु विशेषेण नरकप्रदमेव भवति. अन्यच्च साधुहीलनया लक्ष्म्यादिहानिः स्यात्, मुनिहास्यकरणेन जीवो रोगी स्यात, मुनिनिंदया च वधो भवति, मुखरोगोऽपि स्यात, नेत्रयोर्व्याधिः स्यात्. मुनिताडनतर्जनादिना मरणं राज्यनाशश्च भवेतां, तथैव मुनिराजोपसर्गकरणतोऽनंतसंसारभ्रमणं भवेत्. यदुक्तं—चेइयदव्वविणासे । रिसिघाए पवयणस्स उड्डाहे ॥ संजई चउत्थभंगो । मूलग्गि बोहिलाभस्स ॥ १ ॥ इति राज्ञ्या वचनानि श्रुत्वा राजा किंचित्कर्मपरिणामोल्लसितः सन् प्राह हे प्रिये अथाहमीदृशं कार्यं न करिष्यामि. एवं कतिचिद्दिनावधि तेन हिंसा न कृता, पुनरपि राजा श्रीमतीशिक्षां विस्मृतवान्. एकदा गवाक्षस्थः स राजाहारार्थं वनात्समागतमेकं मुनिं ददर्श, तदा स स्वसेवकान् प्रत्यवादीत्. भो सेवका एनं मलिनं मा-

तंगसदृशं पुरुषं नगराद् बहिर्निष्कासयत? अनेन मे पुरी मलिनीकृता, तदा ते सेवकास्तं मुनिं गले धृत्वा नगरान्निष्कासयामासुः, तदा गवाक्षस्थया श्रीमत्या तत्स्वरूपं दृष्टं, तत्कालं च राजानं समाहूय तस्मै च कोपं कृत्वा सा तं निर्भर्त्सयामास. राजापि लज्जितः सन्नेवमुवाच, हे प्रिये! स मुनिरत्र पुनः समानीयतामहं तेन समं क्षामणां विधास्ये. ततो राज्याग्रहात् स स्वसेवकान् विमुच्य तं मुनिं च समाहूय नत्वा स्वापराधं च क्षामयित्वा च भावेन तदग्रे समुपविष्टः, तदा श्रीमती प्राह हे मुने ममानेन स्वामिना मुनिवधबंधनादिपापं कृतमस्ति, अतोऽस्य पापस्यापगमायास्योपरि कृपां कृत्वा कोऽप्युपायः कथ्यतां. तत् श्रुत्वा मुनिः प्राह हे भद्रेऽनेन घनं पापं कृतमस्ति, मुनिः संतापितोऽस्ति, जीवघातादिकं च तेन महत्पापं कृतमस्ति, अथ तेषां पापानां शुद्ध्यर्थं मया कथ्यमानमुपायं सावधानतया युवां शृणुतं. तदा राजा च राज्ञी च भावेन मुनिना कथ्यमानमुपायं शृणुतः, मुनिराह युवाभ्यां भावपूर्वकं श्रीसिद्धचक्राराधनं विधेयं, तत् श्रुत्वा राज्ञ्या सह राज्ञापि तत्स्वीकृतं. मुनिकथितस्तत्तपोविधिश्च राज्ञ्या स्वमनसि धारितस्ततो राज्ञ्या सह राजापि सिद्धचक्राराधनमकरोत्. उद्यापनावसरे श्रीमत्या अष्टाभिः सखीभिः श्रीनवपदपूजानुमोदिता, अथ तैः सप्तशतपुरु-

पैर्धर्मकर्मपरायणं नृपं दृष्ट्वा तस्य धर्मकार्यं प्रशंसितं, निजपापं च किंचित् क्षामितं. अथान्येद्युस्तेन श्रीकांतराज्ञा तैः सप्तशतपुरुषैः सह समागत्य सिंहराजस्य ग्रामो लुंटितः, ततस्तस्य ग्रामलोकस्य गोमहिषीधान्यादिकं गृहीत्वा ते पश्चाद्वलिताः, तत्स्वरूपं तेन सिंहराजेन ज्ञातं, तदा सोऽपि निजसैन्यं गृहीत्वा तत्पृष्टेऽधावत्. ततस्तेषां संग्रामो बभूव, सिंहेन ते सप्तशतनराः समकालमेव हतास्ते मृत्वा क्षत्रियकुले समुत्पन्नाः, तैः पूर्वभवे साधुताडनकुष्टिकथनाद्यशुभं कर्म समुपार्जितं. तेन ते सर्वे कुष्टिनो जाताः, धर्मप्रशंसनेन च नीरोगा जाताः, यश्चाथ श्रीकांतः स त्वमेवाभवः, या च तव श्रीमतीनामराज्ञ्यासीत् सेयं मदनसुंदरी जाता, सा पूर्वभवे तव वधूरासीदत्रापि सैव ते जाया समजनि. इयं परभवे यथा ते हितवांछकासीत तथात्रापि सा तव हितवांछकैवास्ति. पूर्वेऽपि तया त्वत्पार्श्वे नवपदपूजा कारिताधुनापि तथैव तया कारिता. हे श्रीपाल पुनस्त्वया मुनिः कुष्टी कथितस्तेन त्वं बाल्ये वयसि कुष्टी जातः, श्रीसिद्धचक्रध्यानेन च त्वं नीरोगोऽभवः, मुनिं नदीजले पातनात्त्वमपि सागरे पतितस्तन्निष्कासनाच्च त्वमपि तस्मान्निष्कासितोऽभूः, मुनिंप्रति मातंगकथनात्त्वमपि मातंगो जातो, मुनेश्च क्षामणात्ते मातंगत्वं दूरीभूतं. श्रीसिद्धचक्राराधनप्रभावाच्च त्वं सकलवि-

मलकमलानिवासभूतो जातः, श्रीमत्याः सखीभिश्च नवपदपूजानुमोदनकरणात्ता लघुपट्टराझ्यः संजाताः, एतासां मध्यादष्टम्या राझ्या पूर्वभवे सपत्न्या सह विवादे तस्यै एवं कथितमभूत हे दुष्टे त्वं सर्पेण दष्टा भव तेन साप्यहिना दष्टा. यश्च सिंहराजा सोऽपि प्रहारैर्जर्जरीभूतः सन् मासिकमनशनं दीक्षां च गृहीत्वा कालं कृत्वाऽहमजितसेनो जातस्त्वया तु ममैको ग्रामो लुंटितस्तदा मया तु ते राज्यं गृहीतं. किं च भो राजन्! पूर्वभवे मया समकालमेव सप्तशतनरा मारितास्ततस्तैरप्यहं कृतबंधनस्त्वदग्रे मुक्तः, पूर्वभवे मया दीक्षा गृहीता, ततोऽत्रापि मम चरणमेव शरणरूपं जातं, शुभभावेन च ममावधिज्ञानमपि समुद्भूतं. एवं येन जीवेन यादृशं कर्म क्रियते तादृशमेव फलं स लभते, यतोऽयं जीव एव कर्मणां कर्त्ता भोक्ता चास्ति.

इति मुनिमुखाद्देशनां श्रुत्वा श्रीपालराजा हृदि चिंतयामास अहो भवनाटकं कीदृशमस्ति? अथ मुनेरत्यंतं विनयं कृत्वा पुनः श्रीपालः प्राह हे मुनींद्र! दीक्षाग्रहणे तु मम सामर्थ्यं नास्ति, अतो मयि कृपां विधाय मद्रुचितं कार्यं निवेदय? येनेदं मे जन्म सफलं भवेत्, प्रांते च मोक्षप्राप्तिः स्यात्. तदा मुनिना प्रोक्तं हे राजन्! तव भोग्यकर्मोदयादत्र भवे दीक्षा नास्ति, किं तु न-

वपदध्यानलीनः सन् नवमे स्वर्गे त्वं गमिष्यसि. ततोऽग्रे नरसुरसुखान्यनुभवन् नवमे भवे त्वं मुक्तौ प्रयास्यसि. ततोऽसौ श्रीपालनरेंद्रो मुनिराजं नत्वा स्वस्थाने गतः, मुनिरप्यन्यत्रस्थाने विजहार. अथ श्रीपालनरेंद्रो जननीप्रियाभिः सह श्रीसिद्धचक्रपूजायां लीनो बभूव. अथान्येद्युर्मदनसुंदरी निजभर्त्तारंप्रति प्राह हे नाथ ! प्रथमं तु श्रीनवपदोद्यापनं संक्षेपतः कृतमभूत्, ततोऽधुना पुनस्तत्तपः कृत्वा महाविस्तरेण श्रीनवपदानां पृथक्पृथक् भक्तिः कार्या. तत् श्रुत्वा राज्ञा नव नूतनानि जिनचैत्यानि कारितानि, जिनमंदिराणां जीर्णोद्धाराश्च कृताः, नानाप्रकारपूजाविधयश्च कृताः, एवं स प्रथमार्हत्पदाराधनं करोतिस्म १. सिद्धपदाराधने सिद्धानां नानामूर्त्तयस्तेन कारिताः २. आचार्यपदाराधनार्थं तेषां बहुमानं, तेभ्यो वंदनानि, भक्तपानादिदानं, तथा तेषां विनयवैयावृत्यादिकं स करोति ३. स्थानासनवसनपठनपाठनसाहाय्यकरणादिना स पाठकपदाराधनं करोति ४. अभिगमनवंदनासनवसनदानादिभिः स साधुपदाराधनं विदधाति ५. रथयात्रातीर्थयात्रासंघपूजाशासनप्रभावनादिभिश्च स दर्शनपदाराधनं करोति ६. सिद्धांतपठनपाठनलेखनरक्षणादिभिः स ज्ञानपदाराधनं करोति ७. व्रतनियमपालनयतिधर्मानुरागादिभिश्चारित्रपदाराधनं स करोति. ८. बाह्याभ्यंतरभेदा-

भ्यां तपःपदाराधनं च स करोतिस्म. ए. एवं श्रीसिद्धचक्रतपः कुर्वन् स श्रीपालनरेंद्रो नवपदानां ध्यानमकरोत्. नवपदानां जापश्चात्र जघन्यतस्त्रयोदशसहस्राणीति, तच्चेदं—प्रथमपदस्य द्वादशशतानि १२००, द्वितीयपदस्याष्टौ शतानि ८००, तृतीयस्य षट्त्रिंशच्छतानि ३६००, चतुर्थस्य पंचविंशति शतानि २५००, पंचमस्य सप्तविंशति शतानि २७००, षष्टस्य पंचशतानि ५००, सप्तमस्य पंचशतानि ५००, अष्टमस्य दशशतानि १०००, नवमस्य द्वे शते च २००, सर्वमीलने त्रयोदश सहस्राणि जातानि. तस्य पंचमे वर्षे च निजराज्यलक्ष्म्यनुसारेण तेन महाविस्तरेण महाभक्त्या महाशक्त्या चोद्यापनं तस्य तपसः समारब्धं. तस्य विधिश्चायं—रम्ये विशाले प्रदेशे जिनमंदिरे वा वेदिकात्रययुक्तं श्वेतं चित्रयुक्तं विशालं तेन पीठं कारितं, तदुपरि मंत्रपूतैः पंचवर्णशालिप्रमुखधान्यैर्मनोज्ञं सिद्धचक्रमंडलं तेन रचितं, तत्रार्हदादिषु नवसु पदेषु सर्पिर्मत्स्यंडिमिश्रितश्रीफलगोलकानि स्थापितानि. इति समान्यविधिः, अथ मदनसुंदर्या सह श्रीपालेन प्रथममर्हत्पदे कर्पूरमिश्रितचंदनलिप्तं चतुस्त्रिंशत् हीरकैर्युक्तमष्टकर्केतनसहितं च गोलकं स्थापितं १, द्वितीये सिद्धपदे एकत्रिंशत्प्रवालसहितं अष्टमाणिक्ययुक्तं रक्तचंदनलिप्तं च गोलकं स्थापितं २, तृतीये आचार्यपदे पं-

चगोमेदरत्नयुक्तं पट्त्रिंशत्पुष्पकरत्नकनककुसुमयुक्तं कुंकुमरसलिप्तं गोलकं स्थापितं ३, चतुर्थे पाठकपदे हरितवर्णपंचविंशतिमरकतयुक्तं चतुरिंद्रनीलमणिसहितं गोलकं स्थापितं ४, पंचमे साधुपदे श्यामवर्णसप्तविंशतिनीलकरत्नैर्युतं पंचराजपट्टसहितं गोलकं स्थापितं ५, षष्ठे दर्शनपदे चंदनलिप्तं श्वेतवर्णं सप्तषष्टिमुक्ताफलविराजितं गोलकं स्थापितं ६, सप्तमे ज्ञानपदे श्वेतवर्णैकपंचाशन्मुक्ताफलयुतं गोलकं स्थापितं ७, अष्टमे चारित्रपदे श्वेतवर्णसप्ततिमुक्ताफलैः सहितं गोलकं स्थापितं ८, नवमे तपःपदे श्वेतवर्णपंचाशन्मुक्ताफलैर्युतं गोलकं स्थापितं ९ चेति.

तदा पुनरन्यद्वस्त्रध्वजमालाभरणनैवेद्यश्रीफलादिकं नवपदमुद्दिश्य तेन ढौकितं, षोडश विशालशर्करा लिंगाकारास्तत्र धृताः, ततस्तेन नरेंद्रेणाष्टवर्गेषु सरसचतुःषष्टिद्राक्षाः स्थापिताः, वर्गांतरेषु च नानामणिकनकमंडितबीजपूराणि च धृतानि, अष्टचत्वारिंशल्लब्धिस्थानेषु खर्जूरीफलपुंजोऽनेन धृतः, अष्टगुरुचरणेषु दाडिमफलानि धृतानि, अष्टयतनासु नारंगीफलानि धृतानि, सिद्धचक्राधिष्ठायकानां चतुर्णामग्रे चतुःकुष्मांडानि स्थापितानि, आसन्नसेवकदेवीनामग्रे द्वादश वृंताकानि तेन धृतानि, यक्षयक्षिणीपदेषु चतुःषष्टिपूगीफलानि धृतानि, चतुर्द्वारपालेषु पीतवर्णं बलिदानं द-

त्तं, चतुर्द्वारेषु कृष्णबलिदानं विहितं, नवनिधानेषु कांचनकलशाः स्थापितास्ते च रत्नैर्भृता आसन्, ग्रहदिक्पालेषु च सुवर्णफलपुष्पाणि धृतानि.

इत्यादिमहाविस्तरेण तेन श्रीनवपदानामुद्यापनं कृतं, कलशस्नात्रमहोत्सवोऽपि महाविभूत्या कृतः, इभ्यादिभिः सर्वेभ्यः प्राभृतं कृत्वा तेनाष्टप्रकारपूजारात्रिकं कृतं, मंगलावसरे च सर्वसंघेन मिलित्वा तयोस्तिलके कृते, कुसुममाले च परिधापिते, एवं नानावाजित्रपंचशब्दादिनादपूर्वकं तेन द्रव्यपूजनं कृतं. अथ मदनसुंदर्या सहितः श्रीपालराजा भावस्तुतिं चकार—जो धुरि सिरिअरिहंतमूलदढपीढपइठिओ । सिद्धसूरिउवज्झायसाहु चिहुंपास गरिठिओ ॥ दंसणनाणचरणतवपम्मिसाहयसुंदर । तत्तक्खरसुरवग्गलद्धिगुरुपयदलमंबर ॥ दिसिवालजक्खजक्खिणीपमुहसुरकुसुमेहिं अलंकियो । सो सिद्धचक्कवरकप्पतरु अम्हहि मणवंछिय दिउ ॥ १ ॥ इति नमस्कारं पठित्वा शक्रस्तवं च भावतः कृत्वा पुनः स श्रीनवपदस्तुतिं चकार—' उप्पन्ननाणमहोमयाणं ' इत्यादि दश गाथाः पठित्वा तत्स्थानाच्चोत्थाय सद्गुरूणां नवांगपूजनं विधाय, तेभ्यश्च रम्यवस्त्रपात्रादि च दत्वा वंदनां च कृत्वा महोत्सवयुतं सर्वसंघेन सह मांगल्यतूरभेरिझल्लरीपंचशब्दादिवाजित्रसमूहेन सहितः श्रीजि-

नशासनप्रभावनां कुर्वन् संघपूजापूर्वकं स साधर्मिकाणां वात्सल्यं करोतिस्म. ततोऽसौ निजजनन्या समं सर्वपट्टराज्ञीभिः सममन्यैर्बहुभिश्च समं श्रीसिद्धचक्राराधनं चकार. श्रीश्रीपालनरेंद्रस्य नव पट्टराज्ञ्यो बभूवुस्तासां त्रिभुवनपालप्रमुखा नव पुत्राः समभवन्, तस्य नवसहस्रगजरथा नवलक्षाश्वा नवकोटिपदातयश्चाभवन्. एवमिंद्रसमानलीलया श्रीपालो राज्यसुखमनुभवन् धर्मेण नीत्या च निःकंटकं राज्यं पालयन् नवशतवर्षेषु व्यतीतेषु सत्सु मदनसुंदर्याः सुतं त्रिभुवनपालं राज्ये संस्थापयामास. पुनः स्वद्रव्यस्य सप्तक्षेत्रेषु व्ययं विधाय श्रीपालो मदनसुंदर्या सह नवपदेषु लीनः सन्नेवं स्तुतिं चकार. चतुस्त्रिंशदतिशयविराजमानं तृतीयभवबद्धजिननामकर्माणं महागोपं महामाहनं निर्यामकसार्थवाहोपमायुक्तमष्टप्रातिहार्यशोभाविराजितं पंचत्रिंशद्वाणीगुणगणकलितं स्याद्वादवादिनं जिनमर्हंतं चाहं वंदे, एवं प्रथमपदगुणग्रामे स स्वकीयं कालं निनाय १. अथ द्वितीयं सिद्धपदमहं नमामि, कथंभूतास्ते सिद्धाः? पूर्वप्रयोगेण संगत्यागेन बंधनछेदनेन स्वभावेन च ये मुक्तौ प्राप्ताः संति, एकसमयेनैव तत्र गताः संति, सिद्धशिलाया उपरि योजनषष्ठमभागे स्थिताः संति. एवं तेषां ध्याने लीनः सन् स निजकालं गमयामास २. अथ मया ते आचार्या नमस्यंते, ये पं-

चाचारपालनपरायणा देशकालाद्यपेक्षया शुद्धचारित्रधारिणो युगप्रधानाश्च संति. इति तद्ध्याने स कालं निनाय. अथ ते पाठकाः सदा मया सेव्यंते, ये द्वादशांगपारगा सूर्खशिष्यचित्तेऽपि प्रमोदोत्पादकाः संति, इति तस्मिंश्चतुर्थे पदे लीनः सन् स कालं निनाय ४. तान् साधूनहं वंदे, ये क्रोधमानमायालोभरहिताः, शुद्धसूत्रार्थवक्तारो यतिधर्मधारका रत्नत्रयाराधकाः संति, एवं तद्ध्याने स निजकालं निनाय ५. षष्टं दर्शनपदमहं नमामि, यत् सप्तषष्टिभेदैरलंकृतमस्ति, एवं तद्ध्याने लीनः स निजकालं निनाय ६. सप्तमं ज्ञानपदं नमामि, यन्मतिश्रुतावधिमनःपर्यवकेवलज्ञानात्मकमस्ति, एवं तद्ध्यानेऽसौ लीनो बभूव ७. अष्टमं चारित्रपदमहं नमामि, यत्सप्तदशभेदसंयुक्तमस्ति, एवं तद्ध्यानेऽप्यसौ लीनोऽभूत ८. नवमं तपःपदं नमाम्यहं, यद् बाह्याभ्यंतरभेदाभ्यां द्वादशविधमस्ति, एवं तत्पालनेऽसौ स्वकालं निनाय ९. एवं श्रीनवपदगुणध्यानयुतः श्रीपालनरेंद्रः कालसमये कालं कृत्वा नवमे स्वर्गे सामान्येंद्रो बभूव. तस्य जननी च मदनसुंदरी च सर्वलघुपट्टराज्ञ्यश्च सर्वा अपि कालसमये प्राप्ते सति शुभध्यानेन कालं कृत्वा तत्रैव जग्मुः, ततश्चेमे च्युत्वा मनुष्यत्वं प्राप्य पुनर्देवत्वं प्राप्ताः, एवं चत्वारो देवभवाः पंच च मनुष्यभवास्तेषां ज्ञेयाः, श्रीपालभवान्नवमे भवे ते सर्वे

मोक्षं गमिष्यंति.

एवं हे मगधेश्वर श्रीसिद्धचक्रमाहात्म्यरूपं श्रीपालचरित्रं मया तवाग्रे कथितं. तन्माहात्म्यं श्रुत्वा मगधेश्वरो नवपदेषु समुल्लसितमना एवमुवाच, अहो नवपदानां कीदृशं माहात्म्यमस्ति! ततो गौतमगणधरोऽवादीत् हे नृप! तेष्वेकैकस्यापि पदस्य माहात्म्यमनंतमस्ति, तर्हि नवानामपि पदानां का वार्त्ता कथनीया? तेषु पदेषु देवराजेन प्रथमं पदं ध्यातं, तेन तस्य मुक्तिर्जाता, सिद्धपदाराधनेन पुंमरीकपांडवानां मुक्तिरभूत्. आचार्यपदाराधनेन प्रदेशिनृपस्य मोक्षफलमासीत. पाठकपदाराधनेन वज्रस्वामिनः स्वर्गः संप्राप्तः, साधुपदाराधनेन रूपीरोहिणीप्रमुखाणां शिवं जातं, दर्शनपदाराधनेन सुलसाया महानंदो जातः, ज्ञानपदाराधनेन माषतुषसाधोर्ज्ञानं जातं, चारित्रपदाराधनेन जंबूकुमारस्य केवलं संप्राप्तं, तपःपदाराधनेन दृढप्रहारिणः शिवं जातं. इत्यादिनवपदाराधनेनानेके मोक्षं गता गच्छंति गमिष्यंति च, एवं श्रीसिद्धचक्राराधनप्रभावो ज्ञेयः. एवं श्रीगौतमस्वामिना श्रेणिकनृपाग्रे श्रीनवपदमाहात्म्यं सविस्तरं वर्णितं, भक्त्या श्रीश्रेणिकेन च श्रुतं. तत् श्रुत्वा सर्वे सभास्थिता लोका अपि सानंदा बभूवुः. अथ तस्मिन्नवसरे श्रीवीरप्रभोरपि तत्रागमनं श्रु-

त्वा मगधेशो हर्षितः सन् समवसरणे जगाम. तत्र गत्वा प्रभुं च नत्वा नवपदस्वरूपं पृष्टवान्. तदा यथा पुरा गौतमेनोक्तं तथैव भगवताऽपि कथितं. तदा मगधेश्वरः श्रीवीरजिनं प्रणम्य राजग्रहीं प्रति जगाम. श्रीजगद्गुरुरप्यन्यत्र विजहार. तदा सर्वत्र श्रीसिद्धचक्रमहिमा जातः.

इदं श्रीश्रीपालचरित्रं कथितं, तेन यत्पुण्यं भवेत् तत्पुण्येन वक्तॄणां श्रोतॄणां चाग्रेऽग्रे सुखं भवतु वंशो वृद्धिं च यातु. संवत्सिद्धिरसाष्टैक—प्रमिते मार्गशीर्षके ॥ मासे हि कृष्णपक्षे च । दशम्यां चरितं कृतं ॥ १ ॥ श्रीजिनहर्षसूरीणां । राज्ये रम्ये प्रवर्त्तते ॥ प्राकृतात्संस्कृतं रम्यं । कृतं च जयकीर्त्तिना ॥ २ ॥ श्रीमत्खरतरगछे । कीर्त्तिरत्नाश्च सूरयः ॥ तच्छाखायां सुजाता हि । पाठकाः सुखलाभकाः ॥ ३ ॥ तेषां शिष्या महादक्षा । जिनहंससुवाचकाः ॥ तेषां शिष्याः सदाचाराः । श्रीमन्माणिक्यमूर्त्तयः ॥ ४ ॥ महोपाध्यायपदवी—धारकाश्च जितेंद्रियाः ॥ तच्छिष्या भावहर्षाश्च । महाविद्याधरा वराः ॥ ५ ॥ अमरविमलाश्चात्र । तच्छिष्याः पाठका वराः ॥ तच्छिष्याश्च विराजंते—ऽमृतसुंदरनामतः ॥ ६ ॥ वाचका राजमान्याश्च । वैद्यशास्त्रविशारदाः ॥ तच्छिष्यो महिमाहेमः । सतां मान्यो महासुधीः ॥ ७ ॥ तद्गता जयकीर्त्तिश्च । तेनेदं चरितं कृतं ॥ कांतिरत्नसहायेन । लि-

खितं शोधितं मुदा ॥ ८ ॥ श्रीराजाधिराजस्य । मूलराजस्य नृपतेः ॥ राज्ये प्रतापसंयुक्ते । पुस्तिकेयं कृता मया ॥ ९ ॥ श्रीचिंतामणिपार्श्वेशो । रक्षां करोतु नित्यशः ॥ जेसलमेरुमहादुर्गे । चतुर्मासी कृता वरा ॥ १० ॥ जीवराजसंकलितं । श्रीपालचरितं शुभं ॥ कुशलेनाशु लिखितं । श्रीसद्गुरुप्रसादतः ॥ ११ ॥ आ श्रीपालचरित्रनी मूळ रचनामां घणी जगोए संबंध त्रुटतो होवाथी तेम व्याकरणदोषो पण होवाथी यथाशक्ति तेमां सुधारो करी जामनगरनिवासी पंडित श्रावक हीरालाल हंसराजे पोताना श्रीजैनभास्करोदय छापखानामां छापी आ ग्रंथ प्रसिद्ध कर्यो छे.

॥ समाप्तोऽयं ग्रंथो गुरुश्रीमच्चारित्रविजयसुप्रसादात् ॥

---

